


- जि. महाबलेश्वरभट्टः

सन्धयः

स्वरसन्धिः प्रकृतिभावसन्धिः व्यञ्जनसन्धिः विसर्गसन्धिः स्वादिसन्धिः

संस्कृतभारती

बेङ्गलूरु

प्रकाशनम् -
**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथमं मुद्रणम् - १९९८ - ५०००
द्वितीयं मुद्रणम् - २००० - ५०००
तृतीयं मुद्रणम् - २००१ - ५०००
चतुर्थं मुद्रणम् - २००४ - ५०००

मूल्यं - रू. १५.००

मुद्रणम् -
**वागर्थ प्रिण्टानिक्स्**
एन्, आर्. कालोनी, बेङ्गलूरु - १९

**ISBN 81-88220-19-1**

**SANDHIH** - A Study book for **'Sandhi'**, prepared by Sri G. Mahabaleshwara Bhat. Publisher - **SAMSKRITA BHARATI**, 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085.
Ph : 26721052 / 26722576

Pages - iv + 60 Price - Rs. 15-00 Fourth Print - July 2004

Printed at **VAGARTHA PRINTONICS**, N. R. Colony. Bangalore - 19

# प्रस्तावना

## (प्रथममुद्रणस्य)

सन्धिज्ञानम् अन्तरा संस्कृतक्षेत्रे अध्ययनं दुष्करम् एव । पद्ये गद्ये वा पदच्छेदादिकं विना कथं वा अर्थः अवगम्येत ? पदच्छेदः सन्धिज्ञानमूलः ।

'दैनन्दिनव्यवहारे सन्धिं विनापि व्यवहारः कर्तुं शक्यते' इति भासते कदाचित् । किन्तु सन्धिविषये उपेक्षा प्रदर्शिता चेत् निश्चयेन वयम् अपशब्दप्रयोक्तारः स्याम कदाचित् । समासादिषु सन्धिः नित्यः । व्यवहारे वयं सौकर्यानुगुणं समस्तपदानाम् अपि उपयोगं कुर्मः एव । तत्समये सन्धिज्ञानं विना कथं वा व्यवहारनिर्वाहः शक्येत ?

कौमुद्यादिग्रन्थेषु सन्धीनां निरूपणं प्रक्रियासहितम् उपलभ्यते एव । तथापि प्राप्तस्नातकोत्तरपदवीकाः अपि अत्र व्यामोहं प्राप्नुवन्ति क्वचित् । क्वचिच्च प्रक्रियाजालं सन्देहगर्ते पातयति अस्मान् । त्रिपाद्यां विद्यमानानां विसर्गसन्धिसूत्राणां पौर्वापर्यज्ञानं सुलभावगम्यं नास्तीत्यतः विसर्गसन्धिप्रकरणे बहूनां विभ्रमः । अयोगवाह-स्थान-प्रयत्नादिशब्दानां को वा अर्थः इति सन्देहः बाधते बहून् । यतः तादृशानां पदानाम् अर्थः कौमुद्यादीनाम् अध्ययनमात्रेण न अवगम्यते ।

एतादृशान् सर्वान् अंशान् मनसि निधाय संस्कृताध्यापकानां जिज्ञासूनां च उपकाराय एषः 'सन्धि'सङ्ग्रहः आरचितः अस्ति । विस्तृतं विवरणं, शास्त्रीया टिप्पणी, असन्दिग्धः निरूपणक्रमः च एतस्य पुस्तकस्य वैशिष्ट्यम् । एतस्मात् एव एतत् पुस्तकं छात्राणाम् अध्यापकानां च उपकाराय भवेत् ।

परिष्कारार्हान् अंशान् ज्ञापयन्तु इति उपयोक्तृषु निवेदनम् । महत्या आसक्त्या एतत् पुस्तकं सज्जीकृतवते श्रीमते महाबलेश्वरभट्टमहोदयाय, मुखपुटकलाकाराय 'अरसु'वर्याय, मुद्रकाय, अन्येभ्यः सहकारिभ्यः च कृतज्ञतां समर्पयामः वयम् ।

बहुधान्य सं॥ मार्गशीर्ष-अमावास्या — **प्रकाशकः**

१८.१२.१९९८

## (चतुर्थमुद्रणस्य)

प्रथमावृत्तेः प्रकाशनस्य अनन्तरं वाचकबन्धुभिः उक्तान् परिष्कारार्हान् अंशान्, अस्माकम् अवधानपथम् आगतान् परिष्कारांशान् च योजयित्वा द्वितीयावृत्तिः सज्जीकृता आसीत् । केचन नूतनाः अंशाः अपि योजिताः आसन् तत्र । तस्याः एव पुनः मुद्रणं क्रियमाणम् अस्ति इदानीम् । सहकृतवद्भ्यः सर्वेभ्यः कृतज्ञताः समर्प्यन्ते ।

तारण सं॥ आषाढशुक्लप्रतिपत् — **प्रकाशकः**

१८.६.२००४

# अनुक्रमणिका

**१. अक्षरप्रकरणम्** ........................................ १ - ११

(अ) अक्षरम् - १

(आ) अक्षराणां विभागः - २

१. स्वराः - २

२. अयोगवाहाः - ४

३. व्यञ्जनानि - ५

(इ) स्थानानि प्रयत्नाः च - ६

(ई) माहेश्वरसूत्राणि - १०

**२. सन्धिप्रकरणम्** ........................................ १२,१३

(अ) सन्धयः - १२

(आ) सन्धिभेदाः - १३

**३. स्वरसन्धयः**........................................ १४ - ३०

१. यण्सन्धिः - १४

२. यान्तवान्तादेशसन्धिः - १६

३. गुणसन्धिः - १९

४. वृद्धिसन्धिः - २१

५. सवर्णदीर्घसन्धिः - २३

६. पूर्वरूपसन्धिः - २५

७. पररूपसन्धिः - २६

८. प्रकृतिभावः - २८

**४. व्यञ्जनसन्धिः**........................................ ३१ - ४९

१. श्चुत्वसन्धिः - ३१

२. ष्टुत्वसन्धिः– ३२

३. जश्त्वसन्धिः - ३४

४. चर्त्वसन्धिः - ३६

५. अनुनासिकसन्धिः - ३६

६. अनुस्वारसन्धिः - ३७

७. परसवर्णसन्धिः - ३८

८. ङमुडागमसन्धिः - ४०

९. पूर्वसवर्णसन्धिः - ४१

१०. छत्वसन्धिः - ४२

११. ........... - ४३

१२. ............ - ४४

१३. तुगागमसन्धिः - ४५

व्यञ्जनसन्धिसङ्ग्रहः - ४८

**५. विसर्गसन्धिः** ........................................ ५० - ५५

१. सकारः - ५०

२. जिह्वामूलीयः उपध्मानीयश्च - ५१

३. रेफः - ५२

४. लोपः - ५२

५. उकारः - ५४

**इदमत्र ज्ञातव्यम्**

(अ) बोधनक्रमः इत्थम् - ५६

(आ) पाणिनेः क्रमः - ५८

(इ) विसर्गस्य परिणामाः - ५९

॥ श्रीः ॥

*श्रीमत्पाणिनि-वररुचि-पतञ्जलिभ्यो नमः ॥*

# १. अक्षरप्रकरणम्

## (अ) अक्षरम्

- **अक्षरम्** – श्रवणेन्द्रियग्राह्यम् अक्षरम् । तच्च कण्ठताल्वाद्यभिघातेन अभिव्यज्यते । अक्षरस्यैव नामान्तरं 'वर्णः' इति ।
- **संस्कृताक्षराणि** – नवपञ्चाशत् (५९)[1]
- **स्वराः** – द्वाविंशतिः (२२) ⟶

| ह्रस्वाः | दीर्घाः | प्लुताः |
|---|---|---|
| अ | आ | अ३ |
| इ | ई | इ३ |
| उ | ऊ | उ३ |
| ऋ | ॠ | ऋ३ |
| ऌ | - | ऌ३ |
| - | ए | ए३ |
| - | ऐ | ऐ३ |
| - | ओ | ओ३ |
| - | औ | औ३ |

- **अयोगवाहाः** – चत्वारः (४)
  - ं (अं, इं..) अनुस्वारः ।
  - ः (अः, इः.....) विसर्गः ।
  - ≍क ≍ख जिह्वामूलीयः ।
  - ≍प ≍फ उपध्मानीयः ।
- **व्यञ्जनानि** – त्रयस्त्रिंशत् (२५+८ = ३३)
  - i. **वर्गीयव्यञ्जनानि** – पञ्चविंशतिः (२५)

    क ख ग घ ङ (कवर्गः)

    च छ ज झ ञ (चवर्गः)

---

1. 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः' इति पाणिनीयशिक्षानुरोधेन त्रिषष्टिः (६३) चतुःषष्टिः (६४) वा वर्णाः सन्ति । ५९ वर्णैः सह वेदे श्रूयमाणाः चत्वारो यमवर्णाः यदि योज्यन्ते तदा त्रिपष्टिः (६३) । एतैः सह यदि 'ळ'कारोऽपि योज्यते तदा चतुःषष्टिः (६४) वर्णाः भवन्ति । अत्र अक्षरमालायां न ते पञ्च वर्णाः प्रदर्शिताः । अत ५९ वर्णाः इति लिखितम् । 'क्ष ज्ञ' इत्येते न पृथग् अक्षरे । ककारषकारयोर्योगे क्षः, जकारञकारयोः योगे ज्ञः इति ज्ञेयम् ।

ट ठ ड ढ ण (टवर्गः)
त थ द ध न (तवर्गः)
प फ ब भ म (पवर्गः)

ii. **अवर्गीयव्यञ्जनानि** - अष्ट (८)
य र ल व (अन्तःस्थाः)
श ष स ह (ऊष्माणः)

## (आ) अक्षराणां विभागः

१. स्वराः २. अयोगवाहाः ३. व्यञ्जनानि चेति अक्षराणि त्रिविधानि भवन्ति ।

**स्वराः** - द्वाविंशतिः (२२)

[3]स्वराः नाम स्वतन्त्रतया स्पष्टम् उच्चार्यमाणाः वर्णाः । [4]स्वराश्च त्रिविधाः - १. ह्रस्वस्वराः २. दीर्घस्वराः ३. प्लुतस्वराश्चेति ।

**१.१. ह्रस्वस्वराः**

एकमात्राकालेन उच्चार्यमाणाः स्वराः ह्रस्वस्वराः इत्युच्यन्ते । यथा - अ इ उ ऋ ऌ (५) एतावन्तः एव ह्रस्वाः । ए ऐ ओ औ इत्येते संस्कृते दीर्घाः एव । न कदापि ह्रस्वाः ।

**१.२. दीर्घस्वराः**

द्विमात्रेण कालेन उच्चार्यमाणाः स्वराः दीर्घस्वराः ।
यथा - आ ई ऊ ॠ ए ऐ ओ औ (८) दीर्घः ऌकारः नास्ति ।

**१.३. प्लुतस्वराः**

त्रिमात्रेण कालेन उच्चार्यमाणाः स्वराः प्लुतस्वराः ।
यथा - अ३ इ३ उ३ ऋ३ ऌ३ ए३ ऐ३ ओ३ औ३ (९)
इत्थम् आहत्य द्वाविंशतिः (२२) स्वराः सन्ति ।

- **स्वराणाम् अन्तर्भेदाः -**

i. पूर्वोक्तानां द्वाविंशतेः (२२) स्वराणाम् एकैकोऽपि १. उदात्तः[5] २. अनुदात्तः[6] ३. स्वरितश्चेति[7] त्रिविधो भवति ।

---

2. वर्गीयव्यञ्जनमिति व्याकरणशास्त्रे व्यवहारः न कृतः । वर्गीयमित्यस्य साधुत्वं विद्वद्भिः चिन्तनीयम् ।
3. स्वयं राजन्ते इति स्वराः । (१.२.३० सूत्रे महाभाष्ये)
4. ऊकालोज्झ्रस्वदीर्घप्लुतः - १.२.२७ उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमात् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् ।
5. उच्चैरुदात्तः -१.२.२९ ताल्वादिषु सभागेषु ऊर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञः स्यात् ।
6. नीचैरनुदात्तः -१.२.३० ताल्वादिषु सभागेषु अधोभागे निष्पन्नोऽजनुदात्तसंज्ञः स्यात् ।
7. समाहारः स्वरितः - १.२.३१ उदात्तानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः स्यात् ।

वेदोच्चारणे उदात्तादीनाम् अभिज्ञानं सुकरम् । एतान् उदात्तादीन् वेदपुस्तकेषु इत्थं प्रदर्शयन्ति । यथा -

१. **उदात्तः** - अक्षराणाम् अधस्ताद् उपरिष्टाद् वा कापि रेखा न भवति ।
यथा - अ इ उ...

२. **अनुदात्तः** - अक्षराणाम् अधस्ताद् '_' एषा रेखा भवति । यथा अ॒ इ॒ उ॒...

३. **स्वरितः** - अक्षराणाम् उपरिष्टाद् '।' एषा रेखा भवति ।
यथा - अ॑ इ॑ उ॑

स्पष्टप्रतिपत्तये ऋगेषा प्रदर्श्यते ।

अ॒ग्निमी॑ळे पु॒रोहि॑तम् । य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ।

ii. द्वाविंशतेः स्वराणाम् एकैकोऽपि उदात्तः, अनुदात्तः, स्वरितश्चेति त्रिविधो भवति इत्युक्तम् । एवञ्च सर्वे स्वराः उदात्ताः, अनुदात्ताः, स्वरिताश्चेति त्रिविधाः भवन्ति इति फलितोऽर्थः । एते त्रिविधाः अपि प्रत्येकम् अनुनासिकाः अननुनासिकाश्चेति द्विविधाः भवन्ति । एवञ्च ह्रस्वः षोढा, दीर्घः षोढा, प्लुतश्च षोढा इति फलितम् ।

१. **अनुनासिकाः**

[8]मुखसहितनासिकया उच्चार्यमाणवर्णाः अनुनासिकाः ।
यथा - अँ इँ उँ... (ङ् ञ् ण् न् म्)
व्यञ्जनेषु 'ङ् ञ् ण् न् म्' इत्येतानि पञ्च व्यञ्जनानि नित्यम् अनुनासिकाः । यँ लँ वँ(यलव) इत्येतानि त्रीणि व्यञ्जनानि अनुनासिकान्यपि अननुनासिकान्यपि इति विशेषः ।

२. **अननुनासिकाः**

नासिकां विना कण्ठादिना उच्चार्यमाणाः वर्णाः अननुनासिकाः ।
यथा - अ इ उ .... (क् च्...)

**पूर्वोक्तानां स्वरविषयाणाम् एष सङ्ग्रहः ।**

अ इ उ ऋ ऌ इत्येते पञ्चैव ह्रस्वस्वराः । संस्कृते 'ए ऐ ओ औ' इत्येते नित्यं दीर्घाः एव, कदापि ह्रस्वाः न । आ ई ऊ ॠ ए ऐ ओ औ इत्येते अष्टावेव दीर्घस्वराः । दीर्घऌकारः नास्ति । अ३ इ३ उ३ ऋ३ ऌ३ ए३ ऐ३ ओ३ औ३ इत्येते नवैव प्लुतस्वराः । इत्थम् आहत्य द्वाविंशतिः स्वराः भवन्ति ।

---

8. मुखनासिकावचनोऽनुनासिकः - १.१.८ मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् ।

उदात्तादीनां स्पष्टप्रतिपत्तये ते इत्थं सङ्गृह्य प्रदर्श्यन्ते ।

| *ह्रस्वस्वराः* | *दीर्घस्वराः* | *प्लुतस्वराः* |
|---|---|---|
| अ इ उ ऋ ऌ (५) | आ ई ऊ ॠ<br>ए ऐ ओ औ (८) | अ३ इ३ उ३ ऋ३<br>ऌ३ ए३ ऐ३ ओ३ औ३ (९) |
| (ह्रस्वभेदाः)<br>उदात्तानुनासिकः<br>उदात्ताननुनासिकः<br>अनुदात्तानुनासिकः<br>अनुदात्ताननुनासिकः<br>स्वरितानुनासिकः<br>स्वरिताननुनासिकः | (दीर्घभेदाः)<br>उदात्तानुनासिकः<br>उदात्तानुनासिकः<br>अनुदात्तानुनासिकः<br>अनुदात्ताननुनासिकः<br>स्वरितानुनासिकः<br>स्वरिताननुनासिकः | (प्लुतभेदाः)<br>उदात्तानुनासिकः<br>उदात्तानुनासिकः<br>अनुदात्तानुनासिकः<br>अनुदात्ताननुनासिकः<br>स्वरितानुनासिकः<br>स्वरिताननुनासिकः |

एवञ्च अ इ उ ऋ इत्येतेषां प्रत्येकमष्टादश भेदाः । ऌकारस्य द्वादश । तस्य दीर्घाभावात् । एचाम् अपि द्वादश । तेषां ह्रस्वाभावात् ।

### २. [9]अयोगवाहाः - चत्वारः (४)

माहेश्वरसूत्रेषु अनुच्चारिताः अपि प्रयोगं ये निर्वाहयन्ति ते अयोगवाहाः । [10]'अ इ उ ण्' इत्यादीनि चतुर्दश सूत्राणि महेश्वरेण पठितानि । तत्र वक्ष्यमाणाः अनुस्वारादयः नोक्ताः । किन्तु ते प्रयोगे श्रूयन्ते । अतः माहेश्वरसूत्रेषु अयुक्ताः सन्तः (सम्बन्धम् अप्राप्ताः) प्रयोगं निर्वाहयन्तीति अयोगवाहाः इति अन्वर्थं नाम । एते च अयोगवाहाः १. अनुस्वारः २. विसर्गः ३. जिह्वामूलीयः ४. उपध्मानीयश्चेति चतुर्विधाः सन्ति ।

#### २.१. अनुस्वारः

स्वरेभ्यः परः एव नासिकया अनुस्वारः उच्चार्यते । अनुस्वारस्य चिह्नं स्वरस्योपरि बिन्दुरूपेण (ं) लिख्यते । यथा - अं इं.... ।

#### २.२. विसर्गः

स्वरेभ्यः पर एव तत्तत्स्वरस्थानेन विसर्गोऽपि उच्चार्यते । विसर्गस्य चिह्नं स्वरात्परं बिन्दुद्वयरूपेण (ः) लिख्यते ।

9. न विद्यते योगः (योगः=सम्बन्धः) येषां (माहेश्वरसूत्रेषु) ते अयोगाः । वहन्तीति=वाहाः । अयोगाश्च ते वाहाश्च=अयोगवाहाः ।

10. दशमं (१०) पृष्ठं पश्यन्तु ।

### २.३. जिह्वामूलीयः

⨯क ⨯ ख इति कखाभ्यां प्रागर्धविसर्गसदृशः जिह्वामूलीयः ।
यथा - बाल ⨯ करोति । चैत्र ⨯ खनति ।

### २.४. उपध्मानीयः

⨯प ⨯ फ इति पफाभ्यां प्रागर्धविसर्गसदृशः उपध्मानीयः ।
यथा - बाल ⨯ पिबति । वृक्ष ⨯ फलति ।

एते चत्वारः अयोगवाहाः स्वरत्वेन व्यञ्जनत्वेनापि परिगण्यन्ते ।

## ३. [11]व्यञ्जनानि

स्वरेण सह[12] व्यञ्जनानि उच्चार्यन्ते । यथा - क च टु तु पे इति । व्यञ्जनानां सुखोच्चारणार्थं स्पष्टप्रतिपत्तये च स्वरेण सह व्यञ्जनस्य (क् + अ = क) उच्चारणम् । अतः 'क च टु तु पे' इत्येवमुच्चारितेऽपि 'क् च् ट् त् प्' इत्येतानि स्वररहितान्येव व्यञ्जनानि इति ज्ञेयम् । तस्मात् 'यकारादेशो भवति', 'वकारादेशो भवति' इत्यादेः 'य्' इत्यादेशः 'व्' इत्यादेशो भवतीत्यर्थः ।
व्यञ्जनानि च - १. वर्गीयव्यञ्जनानि २. अवर्गीयव्यञ्जनानि चेति द्विधा ।

### ३.१. **वर्गीयव्यञ्जनानि** (स्पर्शाः) (२५)

ककारादारभ्य मकारान्तं यावत् पञ्चविंशतिः अक्षराणि सन्ति । एतेषु क्रमात् पञ्च गणाः सन्ति । एकैकोऽपि गणः क्रमात् पञ्चाक्षरात्मकः । पञ्चाक्षरात्मकाः पञ्च गणाः एव क्रमाद् कवर्गः, चवर्गः, टवर्गः, तवर्गः, पवर्गश्चेति व्यवह्रियन्ते । अत एव एतानि वर्गीयव्यञ्जनानि इत्यभिधीयन्ते । वर्गीयव्यञ्जनानामेव नामान्तरं 'स्पर्शः' इति । एते पञ्च वर्गाः क्रमात् कु चु टु तु पु शब्दैरपि व्याकरणशास्त्रे व्यवहृताः । अतः कु = कवर्गः, चु = चवर्गः, टु = टवर्गः, तु = तवर्गः, पु = पवर्गः इति ज्ञेयम् ।

### ३.२. **अवर्गीयव्यञ्जनानि** (अन्तःस्थाः + ऊष्माणः च) (८)

य र ल व श ष स ह इत्यष्टौ व्यञ्जनानि पृथक्पृथगेव सन्ति । अतः कमपि वर्गं न प्रविष्टानि । अत एव एतानि अवर्गीयव्यञ्जनानि इत्युच्यन्ते । एतेषु

---

11. अन्वग्भवतीति व्यञ्जनम् । (१.२.३. सूत्रे महाभाष्ये) (अन्वग्भवति=अनुगच्छति अज्गुणम्) कैयटोद्योतयोस्तु - गतिरपि व्यञ्जेरर्थः । विविधम् उदात्तत्वादिनानाप्रकारं, गच्छति अजुपरागवशादिति व्यञ्जनमिति - लिखितम् ।
12. न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति । (१.२.३० सूत्रे महाभाष्ये)

'यरलव' इत्येते चत्वारः 'अन्तःस्थाः' इति, 'शषसह' इत्येते चत्वारः 'ऊष्माणः' इति च व्यवह्रियन्ते ।

इत्थं पञ्चविंशतिः वर्गीयव्यञ्जनानि, अष्टौ अवर्गीयव्यञ्जनानि चेति आहत्य त्रयस्त्रिंशत् (३३) व्यञ्जनानि भवन्ति ।

सन्ध्यादेः नियमानां कथनसौलभ्यार्थं १. मृदुव्यञ्जनानि[13] २. कर्कशव्यञ्जनानि[13] चेत्यपि व्यञ्जनानि विभज्य व्यवह्रियन्ते ।

**i. मृदुव्यञ्जनानि (हश्)**[14]

एकैकस्यपि वर्गस्य अन्तिमास्त्रयो वर्णाः (गघङ, जझञ, डढण, दधन, बभम) य र ल व ह इति पञ्च वर्णाश्च मृदुव्यञ्जनानि । एते वर्णा एव 'हश्' प्रत्याहारान्तर्गताः भवन्ति । अतः मृदुव्यञ्जनानि नाम 'हश्' प्रत्याहारः एव ।

**ii. कर्कशव्यञ्जनानि (खर्)**[14]

एकैकस्यपि वर्गस्य आद्यौ द्वौ वर्णौ (कख, चछ, टठ, तथ, पफ) शषस इति त्रयो वर्णाश्च कर्कशव्यञ्जनानि । एते वर्णाः एव 'खर्' प्रत्याहारान्तर्गताः भवन्ति । अतः कर्कशव्यञ्जनानि नाम 'खर्'प्रत्याहारः एव ।

तथा च द्वाविंशतिः (२२) स्वराः, चत्वारः (४) अयोगवाहाः, त्रयस्त्रिंशद् (३३) व्यञ्जनानि चेति आहत्य नवपञ्चाशत् (२२+४+३३=५९) अक्षराणि सन्ति ।

## (इ) स्थानानि प्रयत्नाश्च

- **स्थानानि – अष्ट (८)**

वर्णाभिव्यक्तिप्रदेशः स्थानम् । कण्ठः, तालु, मूर्धा, दन्तः, ओष्ठौ, नासिका, जिह्वामूलम्, उरश्चेति अष्टौ स्थानानि । यदा शब्दप्रयोगेच्छा भवति तदा कायाग्निना प्रेरितः वायुः कण्ठादिस्थानेषु सञ्चरन् वर्णान् अभिव्यनक्ति । एवं तत्तत्स्थानेषु अभिव्यक्ताः वर्णाः कण्ठ्यः, तालव्यः इत्येवं शब्दैरपि व्यवह्रियन्ते ।

वर्णाः, तत्तद्वर्णानां स्थानानि, तत्तत्स्थानोत्पन्नवर्णानां नामानि च इह सङ्गृह्य प्रदर्श्यन्ते । तथाहि –

---

13. अष्टाध्याय्यां मृदुव्यञ्जनानि कर्कशव्यञ्जनानि इति शब्दाभ्यां व्यवहारो न कृतः । कन्नडादिभाषासु अधुनातनैर्व्यवहारः कृतः । एतावपि संस्कृतशब्दावेव इति कृत्वा अत्र उपात्तौ ।

14.. दशमं (१०) पृष्ठं पश्यन्तु ।

15. 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति पाणिनीयशिक्षानुरोधेन यदि विसर्गः इकारादेः परो भवति तदा विसर्गस्य तत्तत्स्वराणामेव स्थानमिति लघुशब्देन्दुशेखरे उक्तम् ।

| वर्णाः | उत्पत्तिस्थानानि | स्थानजन्यवर्णनामानि |
|---|---|---|
| अ आ अ३ क ख ग घ ङ ह विसर्गः(:)[15] | कण्ठः | कण्ठ्यः |
| इ ई इ३ च छ ज झ ञ य श | तालु | तालव्यः |
| ऋ ॠ ऋ३ ट ठ ड ढ ण र ष | मूर्धा | मूर्धन्यः |
| ऌ ऌ३ त थ द ध न ल स | दन्ताः | दन्त्यः |
| उ ऊ उ३ प फ ब भ म उपध्मानीयः (⨯प⨯फ) | ओष्ठौ | ओष्ठ्यः |
| ङ ञ ण न म | नासिका+कण्ठादिः | अनुनासिकः |
| ए ऐ | कण्ठतालु | कण्ठतालव्यः |
| ओ औ | कण्ठोष्ठम् | कण्ठोष्ठ्यः |
| व | दन्तोष्ठम् | दन्तोष्ठ्यः |
| जिह्वामूलीयम् (⨯क ⨯ख) | जिह्वामूलम् | जिह्वामूलीयः |
| अनुस्वारः | नासिका | - |
| [16]ह्ङ् [16]ह्ञ् ह्ण ह्न ह्म ह्य ह्र ह्ल ह्व | उरः | औरस्यः |

कण्ठतालु, कण्ठोष्ठं, दन्तोष्ठम् इति त्रीणि न पृथक् स्थानानि । अष्टसु स्थानेष्वेव अन्तर्भूतानि । किन्तु 'ए'कारादयः द्वयोः स्थानयोः उत्पद्यन्ते ।

- **प्रयत्नाः (५+११=१६)**

यदा शब्दप्रयोगेच्छा भवति तदा कायाग्निना नाभिदेशात् प्रेरितः प्राणवायुः उर्ध्वम् आक्रामन् मूर्धपर्यन्तं गत्वा प्रतिनिवर्तते । प्रतिनिवृत्तः स वायुः मुखं प्राप्य कण्ठादिस्थानानि आहत्य वर्णान् अभिव्यनक्ति । ततः स एव वायुः गलविवरविकासादीन् करोति । एवञ्च जिह्वाग्रमध्यमूलैः कण्ठादिस्थानाभिघातार्थं, गलविवरविकासाद्यर्थं च वायोः सहायभूता क्रिया एव 'प्रयत्नः' इत्युच्यते । एष प्रयत्नो द्विधा - १. आभ्यन्तरः २. बाह्यश्चेति ।

### १. आभ्यन्तरप्रयत्नः

ओष्ठात्प्रभृति[17] काकलकपर्यन्तम् आस्यमिति व्यवहारः । तत्र स्थितानां स्थानानाम् अभिघातकाः प्रयत्नाः आभ्यन्तराः इत्युच्यते । आस्यान्तर्गतत्वात् एतेषां प्रयत्नानाम् आभ्यन्तरत्वम् । अत एव एते आभ्यन्तरप्रयत्नाः । आभ्यन्तरप्रयत्नश्च पञ्चधा -

---

16. 'ह्ङ् ह्ञ्' एतौ पदावयवत्वेन किं श्रूयेते ? इति विद्वद्भिः चिन्तनीयम् ।

17. काकलको नाम चुबुकस्य अधस्ताद् ग्रीवायाम् उन्नतप्रदेशः ।

18. सावर्ण्यचिन्तनप्रसङ्गे तु अकारस्य विवृतः एव प्रयत्नः ।

१. स्पृष्टः २. ईषत्पृष्टः ३. ईषद्विवृतः ४. विवृतः ५. संवृतश्चेति । केषां वर्णानां के प्रयत्नाः इति इह प्रदर्श्यन्ते । यथा -

| आभ्यन्तरप्रयत्नाः | स्पृष्टः | ईषत्स्पृष्टः | ईषद्विवृतः | विवृतः | संवृतः |
|---|---|---|---|---|---|
| वर्णाः | वर्गीयव्यञ्जनानि (स्पर्शाः) | य र ल व (अन्तःस्था) | श ष स ह (ऊष्माणः) | स्वराः (अचः) | अ (प्रयोगे एव)[18] |

**इदमवधेयम् -**

येषाम् अक्षराणां स्थानानि आभ्यन्तरप्रयत्नाश्च समानाः तानि सवर्णानि इत्युच्यन्ते । यथा - इ ई इ३ इत्येतेषां स्थानं तालु, आभ्यन्तरप्रयत्नश्च विवृतः इति तानि परस्परं सवर्णानि भवन्ति ।[19]

**२. बाह्यप्रयत्नः**

ओष्ठात्प्रभृति काकलकपर्यन्तम् आस्यम् इति उच्यते इत्युक्तम् । काकलकाधस्तात् गलविवरविकासादिकराः बाह्यप्रयत्नाः । आस्याद्बहिर्भूतत्वात् एतेषां बाह्यत्वेन व्यवहारः । बाह्यप्रयत्नाश्च एकादशधा - १. विवारः, २. संवारः, ३. श्वासः, ४. नादः, ५. घोषः, ६. अघोषः, ७. अल्पप्राणः, ८. महाप्राणः, ९. उदात्तः, १०. अनुदात्तः, ११. स्वरितः चेति ।

एतेषु बाह्यप्रयत्नेषु अन्तिमास्त्रयः प्रयत्नाः केवलं स्वरसम्बद्धाः । ते च पूर्वम् उक्ताः । अवशिष्टाः अष्टौ प्रयत्नाः व्यञ्जनसम्बद्धाः । केषां व्यञ्जनानां के प्रयत्नाः इति इह प्रदर्श्यते । यथा -

| *बाह्यप्रयत्नाः* | *वर्णाः* |
|---|---|
| विवारः, श्वासः, अघोषः | क ख, च छ, ट ठ, त थ, प फ, श ष स [कर्कशव्यञ्जनानि (खर्)] |
| संवारः, नादः, घोषः | ग घ ङ, ज झ ञ, ड ढ ण, द ध न, ब भ म, य र ल व ह [मृदुव्यञ्जनानि (हश्)] |

19. सर्वेषां स्वराणां स्वस्वभेदैः ह्रस्वदीर्घप्लुतैः सह परस्परं सावर्ण्यं भवति । अकारस्य इकारस्य, इकारस्य उकारस्य वा परस्परं सावर्ण्यं न भवति । सर्वेषां विजातीयानां स्वराणां स्थानभेदात् । वर्गीयव्यञ्जनेषु स्वस्ववर्गवर्णैः सह परस्परं सावर्ण्यं भवति । यथा - क ख ग घ ङ इत्येतेषां परस्परं सावर्ण्यमस्ति - इति फलितोऽर्थः ।
ऋ ऌ वर्णयोः स्थानभेदे सत्यपि परस्परं सावर्ण्यमस्ति । 'ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्' इति वार्तिकम् अत्र प्रमाणम् ।

| अल्पप्राणः | कगङ, चजञ, जडण, तदन, पबम, यरलव<br>[वर्गाणां प्रथमतृतीयपञ्चमाः अन्तःस्थाश्च (यणः)] |
|---|---|
| महाप्राणः | खघ, छझ, ठढ, थध, फभ, शषसह<br>[वर्गाणां द्वितीयचतुर्थौ, ऊष्माणश्च (शल्)] |

## पूर्वप्रदर्शितेषु कोष्टकेषु निर्दिष्टानाम् एष मथितार्थः -

कर्कशव्यञ्जनानां ('खर्'वर्णानाम्) विवारः श्वासः अघोषश्चेति त्रयः प्रयत्नाः । मृदुव्यञ्जनानां ('हश्'वर्णानाम्) संवारः, नादः, घोषश्चेति त्रयः प्रयत्नाः । पुनरपि वर्गाणां प्रथम-तृतीयपञ्चमानां यरलवानाञ्च अल्पप्राणः । वर्गाणां द्वितीयचतुर्थयोः शषसहां च महाप्राणः । अतः एकैकस्यापि व्यञ्जनस्य सम्बन्धिनः चत्वारो बाह्यप्रयत्नाः भवन्ति । यथा -

'क'कारस्य - १. विवारः २. श्वासः ३. अघोषः ४. अल्पप्राणः
'ख'कारस्य - १. विवारः २. श्वासः ३. अघोषः ४. महाप्राणः
'ज'कारस्य - १. संवारः २. नादः ३. घोषः ४. अल्पप्राणः
'झ'कारस्य - १. संवारः २. नादः ३. घोषः ४. महाप्राणः

## एष सङ्ग्रहः

'स्थानानि प्रयत्नाश्च' इति विभागे प्रदर्शितानाम् एष संक्षेपः । एतानि वाक्यानि[20] कण्ठगतानि यदि भवन्ति तर्हि वर्णानां स्थानप्रयत्नविवेकः सुकरः । तथाहि -

**१. स्थानानि -**

अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । ऌतुलसानां दन्ताः । उपूपध्मानीयानामोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकानुस्वारस्य । पञ्चमवर्णैर्यणा वा युक्तस्य हकारस्य उरः ।

**२. प्रयत्नाः -**

प्रयत्नो द्विधा - आभ्यन्तरो बाह्यश्च ।

i. आभ्यन्तरः पञ्चधा - स्पृष्टेषत्पृष्टेषद्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शानाम् । ईषत्पृष्टमन्तःस्थानाम् । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्य अवर्णस्य प्रयोगे संवृतम् ।

20. कौमुद्याः पङ्क्तयः एव प्रायोऽत्र लिखिताः ।

ii. बाह्यप्रयत्नस्त्वेकादशधा -

विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्त अनुदात्तः स्वरितश्चेति । तत्र खरो विवारश्वासाः अघोषाश्च । हशः संवारनादाः घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमाः यणश्चाल्पप्राणाः । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः[21] ।

## (ई) माहेश्वरसूत्राणि

यानि चतुर्दश सूत्राणि आश्रित्य समस्तं व्याकरणं प्रवृत्तं, तानि 'अक्षरसमाम्नाय' इति शब्देन व्यवह्रियन्ते । महेश्वराद् इमानि चतुर्दश सूत्राणि समधिगतानि इति कृत्वा तानि माहेश्वरसूत्राणि इति लोके प्रसिद्धिं गतानि ।

इमानि च तानि चतुर्दश माहेश्वरसूत्राणि -

| | | |
|---|---|---|
| **१. अइउण्** | **२. ऋलृक्** | **३. एओङ्** |
| **४. ऐऔच्** | **५. हयवरट्** | **६. लण्** |
| **७. ञमङणनम्** | **८. झभञ्** | **९. घढधष्** |
| **१०. जबगडदश्** | **११. खफछठथचटतव्** | **१२. कपय्** |
| **१३. शषसर्** | **१४. हल्** | |

एतेषु चतुर्दशसु सूत्रेष्वपि स्वररहितम् एकैकं व्यञ्जनम् अन्ते श्रूयते । एतादृशेन अन्तिमवर्णेन सह आदिमवर्णः यदि उच्चार्यते तर्हि तदन्तिमं व्यञ्जनं विहाय सर्वे वर्णाः गृहीताः भवन्ति । यथा - 'अइउण्' इति सूत्रस्थः 'अ'कारः 'ऐऔच्' इति सूत्रस्थेन अन्तिमव्यञ्जनेन 'च'कारेण सह यद्युच्चार्यते तदा अच् इति श्रूयते । तदा 'अच्' इति पदात् 'अ इ उ ऋ लृ ए ओ ऐ औ' इति वर्णाः उपस्थिताः भवन्ति । एवम् उपसंहृत्य व्यवहृतः शब्दः 'प्रत्याहारः' इति शब्देन व्याकरणे प्रथितः । स्पष्टप्रतिपत्तये केचन प्रत्याहाराः विवृत्य प्रदर्श्यन्ते । तथाहि -

अक् - अ इ उ ऋ लृ
यण् - य् व् र् ल्
जश् - ज् ब् ग् ड् द्
चर् - च् ट् त् क् प् श् ष् स्
अच् - सर्वे स्वराः
हल् - सर्वाणि व्यञ्जनानि

---

21. पाणिनीयशिक्षायाम् अक्षराणि, तेषां भेदाः, अक्षराणां स्थानानि, प्रयत्नाश्चेत्येवमादयः विषयाः उक्ताः । अक्षराणाम् उच्चारणप्रक्रियापि दर्शिता । अहो ! भाषाविषये अस्मदीयानां सूक्ष्मेक्षिका !!

प्रत्याहारे द्वयमिदं स्मरणीयम् -

१. सूत्राणामन्ते विद्यमानानां स्वररहितानां व्यञ्जनानां ग्रहणं न भवति । यथा - अक् । अत्र अ इ उ ऋ ऌ इत्येतेषां ग्रहणं भवति, न तु णकारककारयोर्ग्रहणम् ।

२. आदिमः वर्णो नाम सूत्रेषु आदिमत्वेन श्रूयमाणः एव वर्णः इति न नियमः । अस्माभिः आदिमत्वेन विवक्षितः इति ज्ञेयम् ।
यथा - इक्, यण्, रल्, चर्...

*****

# २. सन्धिप्रकरणम्

## (अ) सन्धयः

वर्णानाम् अतिशयितः सन्निधिः सन्धिः । एकस्य वर्णस्य उच्चारणानन्तरम् अपरस्य वर्णस्य उच्चारणम् ततः तृतीयस्य, ततः चतुर्थस्य इत्येवं क्रमेण शब्दोच्चारणं भवति । द्वयोः वर्णयोः उच्चारणयोः मध्ये अर्धमात्राकालात् अपि अधिककालेन व्यवधानं यथा न भवेत् (द्वयोः वर्णयोः उच्चारणयोः मध्ये अर्धमात्राकालः सह्यते इत्यर्थः) तथा उच्चारणमेव सन्धिः । एवं सन्धौ सति कदाचिद् वर्णस्य आदेशादिकं भवति । इत्थम् आदेशादिकम् एव सन्धिकार्यम् इत्युच्यते । इदं च सन्धिकार्यं पदस्य मध्ये पदयोर्मध्ये वा सम्भवेत् ।

यथा - १. हरे + ए = हरये । २. इति + अपि = इत्यपि

अत्र आद्ये पदस्य मध्ये, द्वितीये पदयोर्मध्ये सन्धिकार्यं प्रवृत्तम् । लोके तु सन्धिकार्यमित्यर्थे सन्धिरिति व्यवहारः क्रियते । अतः सन्धिप्रकरणमित्यस्य सन्धिकार्यप्रकरणमित्यर्थः । यण्सन्धिरित्यस्य यण्रूपसन्धिकार्यमित्यर्थः । इत्थञ्च सन्धिप्रकरणे सन्धिशब्दः सन्धिकार्यपरः इति ज्ञेयम् । आदेशादिकं चतुर्धा सम्भवति - १. आदेशरूपेण २. आगमरूपेण ३. लोपरूपेण ४. प्रकृतिभावरूपेण ।

**१. आदेशः**

'योऽभूत्वा भवति सः आदेशः' इति भाष्यकारेण उक्तम् । पूर्वस्थितम् अक्षरं निरस्य नूतनस्य अक्षरस्य उदयः एव आदेशः । अतः एव **शत्रुवदादेशः** इति वृद्धाः व्यवहरन्ति । अयमादेशः पूर्वस्य स्थाने परस्य वा स्थाने स्यात्, पूर्वपरयोः स्थानेऽपि स्यात् । पूर्वपरयोः स्थाने प्रवर्तमानः आदेशः 'एकादेशः' इति शब्देन व्यवह्रियते ।

यथा - १. यदि + अपि = यद्यपि । अत्र इकारस्य स्थाने यकारादेशः ।

२. गण + ईशः = गणेशः । अत्र पूर्वपरयोः अकारेकारयोः स्थाने (अ + इ) एकाररूपः एकादेशः ।

**२. आगमः**

स्थितस्य वर्णस्य पार्श्वेऽपूर्वतया अपरस्य वर्णस्य उत्पत्तिः आगमः ।

**मित्रवद् आगमः** इति फलितार्थः ।

यथा - पठन् + अस्ति = पठन्नस्ति । अत्र अकारात्पूर्वं अपूर्वः (नूतनः) अपरो नकारः उत्पन्नः ।

**३. लोपः**

वर्णस्य अदर्शनं लोपः ।

यथा - १. उभाव् + अपि = उभा अपि । अत्र वकारस्य लोपः ।

**४. प्रकृतिभावः**

निमित्ते सत्यपि आदेशाभावो विधीयते । सः एव प्रकृतिभावः ।

यथा - हरी + एतौ = हरी एतौ । अत्र यणो निमित्तस्य सद्भावेऽपि यण् न प्रवृत्तः । यणभावोऽत्रास्ति ।

## (आ) सन्धिभेदाः

सन्धयस्त्रिविधाः[1]· १. स्वर(अच्)सन्धिः २. व्यञ्जन(हल्)सन्धिः ३. विसर्गसन्धिश्चेति ।

१. स्वरसन्धिः - स्वरस्य स्थाने आदेशः स्वरसन्धिः ।

यथा -

अनु + एषणम् = अन्वेषणम् । अत्र उकारस्य स्थाने आदेशः ।

२. व्यञ्जनसन्धिः - व्यञ्जनस्य स्थाने आदेशः, लोपः, व्यञ्जननिमित्तकागमश्च-व्यञ्जनसन्धिः ।

यथा -

जगत् + ईशः = जगदीशः - अत्र तकारस्य स्थाने आदेशः ।

उभाव् + अपि = उभा अपि - अत्र वकारस्य लोपः ।

पचन् + अस्ति = पचन्नस्ति – अत्र व्यञ्जननिमित्तकः आगमः ।

३. विसर्गसन्धिः - विसर्गस्य स्थाने आदेशः [2]लोपश्च विसर्गसन्धिः ।

यथा -

बालः + तत्र = बालस्तत्र - अत्र विसर्गस्य स्थाने आदेशः ।

वृक्षाः + अत्र = वृक्षा अत्र - अत्र विसर्गस्य लोपः ।

प्रकृतिभावः स्वरसन्धौ, स्वादिसन्धिः विसर्गसन्धौ च अन्तर्भावितः अत्र इति ज्ञेयम् ।

---

1. वैयाकरणाः सन्धीन् पञ्चभिः प्रकारैः विभजन्ते । अच्सन्धिः, प्रकृतिभावः, व्यञ्जनसन्धिः, विसर्गसन्धिः, स्वादिसन्धिश्चेति । पुस्तकेऽस्मिन् बोधनसौकर्याय 'त्रिविधाः सन्धयः' इति विभागो दर्शितः । अयं पाणिनीयपरिधावेवेति ज्ञेयम् ।
2. अष्टाध्याय्यां साक्षात् विसर्गस्य लोपो न विहितः । अस्मिन् पुस्तके बोधनसौकर्याय विसर्गस्य लोपरूपः उपायोऽप्याश्रितः । न तावता पाणिनीयेन विरोधः । लक्ष्यस्य उभयथापि सिद्धेः । अतोऽस्मिन् पुस्तके क्वचिदुपायान्तराश्रयणं पाणिनीयपरिधावेव इति ज्ञेयम् ।

# ३. स्वरसन्धयः

स्वरसन्धयोऽष्टविधाः । तथा हि -

| | |
|---|---|
| १. यण्सन्धिः<br>२. यान्तवान्तादेशसन्धिः | एतयोः द्वयोः सन्ध्योः पूर्वस्य एकस्यैव वर्णस्य स्थाने आदेशो भवति । |
| ३. गुणसन्धिः<br>४. वृद्धिसन्धिः<br>५. सवर्णदीर्घसन्धिः<br>६. पूर्वरूपसन्धिः<br>७. पररूपसन्धिः | पञ्चस्वपि एतेषु सन्धिषु पूर्वस्य परस्य च स्थाने एकादेशो भवति । |
| ८. प्रकृतिभावः - | अत्र आदेशाभावः । |

## १. यण्सन्धिः

*यण् = य् व् र् ल्

| इई | उऊ | ऋॠ | ऌ |
|---|---|---|---|
| य् | व् | र् | ल् |

\+ असवर्णस्वरः

³इ ई उ ऊ ऋ ॠ ऌ इत्येतेभ्यो वर्णेभ्योऽसवर्णे स्वरे परे 'इ ई' इत्यनयोः स्थाने यकारः, उ ऊ इत्यनयोः स्थाने वकारः, ऋॠ इत्यनयोः स्थाने रकारः (रेफः), ऌकारस्य स्थाने लकारश्च आदेशो भवति । यथा -

i. इ / ई + (असवर्णस्वरः) = य्

१. प्रति + एकम्
   प्रत् + य् + एकम् = प्रत्येकम् । (इ = य्)

२. नदी + अत्र
   नद् + य् + अत्र = नद्यत्र । (ई = य्)

---

* 'यण्' इति प्रत्याहारः । (१० पृष्ठं पश्यन्तु)

3. इको यणचि - ६.१.७७ इकः स्थाने यण् स्यादचि संहितायां विषये । इको यण् स्यादसवर्णेऽचि परे इति सूत्रस्य फलितोऽर्थः इति ज्ञेयम् ।

## विशेषः

१. वधू + ङस् + आगमन + सु = षष्ठी, कृत्तद्धितसमासाश्च

वधू + आगमन = सुपो धातुप्रातिपदिकयोः

वध् + व् + आगमन = इको यणचि

वध्वागमन + सु = स्वौजसमौट् ...

वध्वागमन + अम् = अतोऽम्

वध्वागमनम् = अमि पूर्वः

वधू + ङस् + आगमन + सु = इत्यवस्थायां षष्ठीसमासे प्रातिपदिकसंज्ञायां सुप्प्रत्यययोर्लोपे यण्सन्धौ समुदायात् सुप्रत्यये, अमादेशे, पूर्वरूपे च वध्वागमनम् इति सिद्धं भवति । एषः 'वध्वागमनम्' इत्यस्य समस्तस्य पदस्य प्रक्रियाक्रमः । एतासु प्रक्रियासु यण्सन्धिरपि प्रविष्टः । स च यण् वधू + आगमन इत्यवस्थायां प्रवर्तते, न तु वधू + आगमनम् इत्यवस्थायाम् । सन्धिप्रवृत्त्यनन्तरमेव सुबुत्पत्तेः । समासे सर्वत्र एषा एव सरणिः शास्त्रीया ।

२. गो + य = गोपयसोर्यत्

ग् + अद् + य = एचोऽयवायावः

गव्य + सु = स्वौजसमौट् .....

गव्य + अम् = अतोऽम्

गव्यम् = अमि पूर्वः ।

गो इति प्रातिपदिकात् 'य'प्रत्यये अवादेशे, सुप्रत्यये, अमादेशे, पूर्वरूपे च गव्यम् इति रूपं भवति । अत्रापि गो + य इत्यवस्थायां अवादेशः प्रवर्तते, न तु गो + यम् इत्यवस्थायाम् । सन्धिप्रवृत्त्यनन्तरमेव सुबुत्पत्तेः । प्रत्यये परे सर्वत्र एषा एव शास्त्रीया सरणिः । किन्तु ग्रन्थेऽस्मिन् एषा सरणिः न आश्रिता ।

अतः वधू + आगमनम् इत्यवस्थायां यणादेशः इति, गो यम् इत्यवस्थायाम् अवादेशः इति च निरूपणं कृतम् ।

इत्थमेव ग्रन्थेऽस्मिन् सर्वत्र निरूपितम् । तत्र तु कारणं - प्रायः अध्यापन-परिपाटी एव । बालमनोरमादिव्याख्यानेऽपि क्रमोऽयं क्वचित् दृश्यते ।

ii. | उ / ऊ + (असवर्णस्वरः) = व् |

१. मनु + अन्तरम्

मन् + व् + अन्तरम् = मन्वन्तरम् । (उ = व्)

२. वधू + आगमनम्

वध् + व् + आगमनम् = वध्वागमनम् । (ऊ = व्)

iii. | ऋ / ॠ[4] + (असवर्णस्वरः) = र् |

१. पितृ + इच्छा

पित् + र् + इच्छा = पित्रिच्छा । (ऋ = र्)

iv. | ऌ + (असवर्णस्वरः) = ल् |

१. घस्ऌ + आदेशः

घस् + ल् + आदेशः = घस्लादेशः । (ऌ = ल्)

अन्यान्युदाहरणानि -

यदि + अपि = यद्यपि ।

सुधी + उपास्यः = सुध्युपास्यः ।

धातृ + अंशः = धात्रंशः ।

पितृ + अंशः = पित्रंशः ।

वधू + आसनम् = वध्वासनम् ।

इति + आचरन्ति = इत्याचरन्ति ।

इति + आक्षिप्तः = इत्याक्षिप्तः ।

साधु + इदम् = साध्विदम् ।

स्मरामि + अहम् = स्मराम्यहम् ।

इति + आधुनिकः = इत्याधुनिकः ।

नास्ति + असाध्यम् = नास्त्यसाध्यम् ।

इति + अपि = इत्यपि ।

मधु + अरिः = मध्वरिः ।

ऌ + आकृतिः = लाकृतिः ।

जननी + आह = जनन्याह ।

अति + उत्तमः = अत्युत्तमः ।

प्रति + अवदत् = प्रत्यवदत् ।

वस्त्राणि + उत्पादयति = वस्त्राण्युत्पादयति ।

भवतु + अधुना = भवत्वधुना ।

पार्वती + अधुना = पार्वत्यधुना ।

व्यसनेषु + असक्तम् = व्यसनेष्वसक्तम् ।

## २. यान्तवान्तादेशसन्धिः

यान्तौ वान्तौ च = अय् आय् अव् आव्

**२.१.**

| ए | ऐ | ओ | औ |
|---|---|---|---|
| अय् | आय् | अव् | आव् |

+ स्वरः

[5]'ए ऐ ओ औ' इत्येतेभ्यो वर्णेभ्यः स्वरे परे एकारस्य स्थाने अय्, ऐकारस्य स्थाने आय्, ओकारस्य स्थाने अव्, औकारस्य स्थाने आव् च आदेशो भवति ।

---

4. ॠकारात्परः असवर्णस्वरः दुर्लभः । तादृशोदाहरणस्य विरलत्वात् । कॄ + इति = क्रिति इत्युदाहरणं कथञ्चिद्देयम् । 'कॄ' इति कश्चन धातुः ।

5. एचोऽयवायावः - ६.१.७८ एचः क्रमाद् अय् अव् आय् आव् एते स्युरचि ।

i. | ए + (स्वरः) = अय् |

- हरे + ए

  हर् + अय् + ए = हरये । (ए = अय्)

- हरे + आगच्छ

  हर् + अय् + आगच्छ = *हरयागच्छ । (ए = अय्)

ii. | ऐ + (स्वरः) = आय् |

- नै + अकः

  न् + आय् + अकः = नायकः । (ऐ = आय्)

- तस्यै + इदम्

  तस्य् + आय् + इदम् = *तस्यायिदम् । (ऐ = आय्)

iii. | ओ + (स्वरः) = अव् |

- विष्णो + ए

  विष्ण् + अव् + ए = विष्णवे । (ओ = अव्)

- गुरो + आदिश

  गुर् + अव् + आदिश = *गुरावादिश । (ओ = अव्)

iv. | औ + (स्वरः) = आव् |

- पौ + अकः

  प् + आव् + अकः = पावकः । (औ = आव्)

- बालकौ + आगतौ

  बालक् + आव् + आगतौ = *बालकावागतौ । (औ = आव्)

अन्यान्युदाहरणानि -

फले + इच्छा = फलयिच्छा / फल इच्छा
कटे + उपवेशनम् = कटयुपवेशनम् / कट उपवेशनम्
जने + उत्कण्ठा = जनयुत्कण्ठा / जन उत्कण्ठा
वदने + औषधम् = वदनयौषधम् / वदन औषधम्
तस्मै + एतत् = तस्मायेतत् / तस्मा एतत्
तस्यै + ओदनम् = तस्यायोदनम् / तस्या ओदनम्
वै + इह = वायिह / वा इह
द्विषावहै + आर्तिम् = द्विषवहायार्तिम् / द्विषावहा आर्तिम्

करौ + एतौ = करावेतौ / करा एतौ
तौ + एकदा = तावेकदा / ता एकदा
बालौ + ओजस्विनौ = बालावोजस्विनौ / बाला ओजस्विनौ
नरौ + उदारौ = नरावुदारौ / नरा उदारौ
भानो + इह = भानविह / भान इह
गुरो + उत्साहः = गुरवुत्साहः / गुर  उत्साहः

**२.२.**

| ओ | औ |
|---|---|
| अव् | आव् |

\+ यादिप्रत्ययः

[6]यकारादिप्रत्यये परे ओ औ इत्येतयोः स्थाने क्रमाद् अव् आव् एतौ आदेशौ भवतः ।

i. ओ + (यादिप्रत्ययः) = अव्

गो + यम्
ग् + अव् + यम् = गव्यम् (ओ = अव्)

ii. औ + (यादिप्रत्ययः)

नौ + यम्
न् + आव् + यम् = नाव्यम् । (औ = आव्)

## इदमवधेयम्

स्वरसन्धिषु यण्सन्धौ यान्तवान्तादेशसन्धौ च एकस्य (पूर्वस्थितस्य) वर्णस्य स्थाने आदेशो भवति । इदं सन्धिद्वयं विहाय अन्यत्र स्वरसन्धिषु पूर्वपरयोः स्थाने एकादेशो भवति ।

**विशेषः** - i. [7]पदान्ते* विद्यमानानाम् 'ए ऐ ओ औ' इत्येतेषां वर्णानां क्रमाद् अय् आय् अव् आव् एते आदेशाः यदा भवन्ति तदा यकारस्य वकारस्य च विकल्पेन लोपो भवति । लोपे कृते पुनः सन्धिः न करणीयः ।

१. हरे + आगच्छ = हरयागच्छ / हर आगच्छ । (सवर्णदीर्घः न)

---

6. वान्तो यि प्रत्यये - ६.१.७९ यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः । 'गव्यूतिः' इत्यत्र 'अध्वपरिमाणे च' इति वार्तिकेन अवादेशः । ओयते, औयत इत्यादौ 'धातोस्तन्निमित्तस्यैव' (६.१.८०) इति नियमात् न अवावौ भवतः ।
7. लोपः शाकल्यस्य - ८.३.१९ अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोऽशि परे । पूर्वत्रासिद्धम् - ८.२.१ इति लोपशास्त्रस्य असिद्धत्वात् न स्वरसन्धिः ।

२. तस्यै + इदम् = तस्यायिदम् / तस्या इदम् । (गुणसन्धिः न)
३. गुरो + आदिश = गुरवादिश / गुर आदिश । (सवर्णदीर्घः न)
४. बालकौ + आगतौ = बालकावागतौ / बालका आगतौ । (सवर्णदीर्घः न)

ii. पदान्तादेकाराद् ओकाराच्च अकारे परे पूर्वरूपं* भवति ।
यथा - हरे + अव = हरेऽव
विष्णो + अव = विष्णोऽव

**३. गुणसन्धिः** [8]गुणः = ए ओ अर् अल्

| अ/आ + इ/ई | अ/आ + उ/ऊ | अ/आ + ऋ/ॠ | अ/आ + ऌ |
|---|---|---|---|
| ए | ओ | अर् | अल् |

[9]अ आ इत्येताभ्यां वर्णाभ्याम् इ ई [10] इत्येतयोः परयोः एकारः, उ ऊ इत्येतयोः परयोः ओकारः, ऋॠ इत्येतयोः परयोः अर्, ऌकारे परे अल् च पूर्वपरयोः स्थाने एकादेशो भवति ।

i. अ/आ + इ/ई = ए

- देव + इन्द्रः
देव् + ए + न्द्रः = देवेन्द्रः । (अ + इ = ए)
- गण + ईशः
गण् + ए + शः = गणेशः । (अ + ई = ए)
- महा + इन्द्रः
मह् + ए + न्द्रः = महेन्द्रः । (आ + इ = ए)
- महा + ईशः
मह् + ए + शः = महेशः । (आ + ई = ए)

---

8. अदेङ्गुणः - १.१.२ अत् एङ् च गुणसंज्ञः स्यात् ।
9. आद् गुणः - ६.१.८७ अवर्णादचि परे पूर्वपरयोरेको गुणः आदेशः स्यात्संहितायाम् । अवर्णादिकि परे इति सूत्रस्य फलितोऽर्थः इति ज्ञेयम् ।
10. प्लुते इकारे (इ३) परेऽपि गुणो भवति । एवं प्लुते उकारे अपि । किन्तु तादृशस्य लक्ष्यस्य अत्यन्तं दुर्लभत्वात् निमित्तकोटौ न तौ उपात्तौ । अतः पूर्वरूपसन्धिं विहाय अन्ये सन्धयः प्रवर्तन्ते यदि परस्थाने प्लुतः श्रूयेत इति सर्वेषु स्वरसन्धिषु ज्ञेयम् ।

* पूर्वरूपसन्धिं २५ पृष्ठे पश्यन्तु ।

ii. | अ/आ + उ/ऊ = ओ |

- सूर्य + उदयः
  सूर्य् + ओ + दयः = सूर्योदयः । (अ + उ = ओ)
- एक + ऊनविंशतिः
  एक् + ओ + नविंशतिः = एकोनविंशतिः । (अ + ऊ = ओ)
- महा + उत्सवः
  मह् + ओ + त्सवः = महोत्सवः । (आ + उ = ओ)
- महा + ऊर्मिः
  मह् + ओ + र्मिः = महोर्मिः । (आ + ऊ = ओ)

iii. | अ/आ + ऋ/ॠ[11] = अर् |

- सप्त + ऋषयः
  सप्त् + अर् + षयः = सप्तर्षयः । (अ + ऋ = अर्)
- महा + ऋषिः
  मह् + अर् + षिः = महर्षिः । (आ + ऋ = अर्)

iv. | अ/आ + ऌ = अल् |

- तव + ऌकारः
  तव् + अल् + कारः = तवल्कारः । (अ + ऌ = अल्)
- महा + ऌकारः
  मह् + अल् + कारः = महल्कारः । (आ + ऌ = अल्)

अन्यान्युदाहरणानि -

| | |
|---|---|
| उप + इन्द्रः = उपेन्द्रः | राम + इति = रामेति |
| परम + ईश्वरः = परमेश्वरः | च + इति = चेति |
| महा + ईश्वरः = महेश्वरः | न + उन्नतः = नोन्नतः |
| रमा + ईशः = रमेशः | हित + उपदेशः = हितोपदेशः |
| गुण + उपेतम् = गुणोपेतम् | गङ्गा + उदकम् = गङ्गोदकम् |
| सुलभ + उपायः = सुलभोपायः | राजा + ऋषिः = राजर्षिः |
| सप्त + ऋषयः = सप्तर्षयः | ब्रह्म + ऋषिः = ब्रह्मर्षिः |
| कृष्ण + ऋद्धिः = कृष्णर्द्धिः | प्रश्न + उत्तरम् = प्रश्नोत्तरम् |
| परम + उत्कृष्टम् = परमोत्कृष्टम् | पर + उपकारः = परोपकारः |

11. अकाराद् आकाराद्वा परः ॠकारः दुर्लभः । सप्त + ॠकाराः = सप्तर्कारा इत्यादि कल्पनीयम् ।

| | |
|---|---|
| पुरुष + उत्तमः = पुरुषोत्तमः | प्राचीना + उक्तिः = प्राचीनोक्तिः |
| धीर + उद्धतः = धीरोद्धतः | परिचयस्य + उद्देशः = परिचयस्योद्देशः |
| जिह्वा + इति = जिह्वेति | न + इच्छति = नेच्छति |
| देव + ऋषिः = देवर्षिः | महा + उद्देशः = महोद्देशः |

## ४. वृद्धिसन्धिः

[12]वृद्धिः = ऐ, औ, आर्, आल्

**४.१.**

| अ/आ + ए/ऐ | अ/आ + ओ/औ |
|---|---|
| ऐ | औ |

[13]'अ आ' इत्येताभ्यां वर्णाभ्याम् 'ए ऐ' इत्येतयोः परयोः 'ऐ'कारः, 'ओ औ' इत्येतयोः परयोः 'औकारः' च, पूर्वपरयोः स्थाने एकादेशो भवति[14] ।

i. **अ/आ + ए/ऐ = ऐ**

- एक + एकम्
  एक् + ऐ + कम् = एकैकम् । (अ + ए = ऐ)
- तव + ऐश्वर्यम्
  तव् + ऐ + श्वर्यम् = तवैश्वर्यम् । (अ + ऐ = ऐ)
- सदा + एव
  सद् + ऐ + व = सदैव । (आ + ए = ऐ)
- महा + ऐश्वर्यम्
  मह् + ऐ + श्वर्यम् = महैश्वर्यम् । (आ + ए = ऐ)

ii. **अ/आ + ओ/औ = औ**

- तस्य + ओदनः
  तस्य् + औ + दनः = तस्यौदनः । (अ + ओ = औ)
- मम + औषधम्
  मम् + औ + षधम् = ममौषधम् । (अ + औ = औ)
- गङ्गा + ओघः
  गङ्ग् + औ + घः = गङ्गौघः । (आ + ओ = औ)

---

12. वृद्धिरादैच् - १.१.१. आदैच्च वृद्धिसंज्ञः स्यात् ।
13. वृद्धिरेचि - ६.१.८८ आदेचि परे वृद्धिरेकादेशः स्यात् ।
14. पररूपसन्धौ 'अस्यापवादः' इत्यारभ्य लिखिताः पङ्क्तीः पश्यन्तु । (२७ पृष्ठे)

- महा + औत्सुक्यम्

  मह् + औ + त्सुक्यम् = महौत्सुक्यम् । ( आ + औ = औ)

अन्यान्युदाहरणानि -

| | |
|---|---|
| कृष्ण + एकत्वम् = कृष्णैकत्वम् | देव + ऐश्वर्यम् = देवैश्वर्यम् |
| वन + औषधम् = वनौषधम् | द्वितीया + एकवचनम् = द्वितीयैकवचनम् |
| अद्य + एव = अद्यैव | दिव्य + औषधम् = दिव्यौषधम् |
| न + एव = नैव | कृष्ण + औत्कण्ठ्यम् = कृष्णौत्कण्ठ्यम् |
| तत्र + एव = तत्रैव | तत्र + एकदा = तत्रैकदा |
| तव + औदार्यम् = तवौदार्यम् | तथा + एव = तथैव |
| मा + एवम् = मैवम् | परम + औचित्यम् = परमौचित्यम् |
| यदा + एव = यदैव | दृष्ट्वा + एतत् = दृष्ट्वैतत् |
| राष्ट्र + ऐक्यम् = राष्ट्रैक्यम् | देवता + एकात्म्यम् = देवतैकात्म्यम् |
| परम + औदार्यम् = परमौदार्यम् | रक्ता + ओषधी = रक्तौषधी |

**४.२.**

| [15]अ/आ + ऋ | [15]ए/ऐ + ऌ |
|---|---|
| आर् | आल् |

[16]अकारान्ताद् आकारान्ताद्वा उपसर्गाद् ऋकारादौ धातौ परे पूर्वपरयोः स्थाने आर् इत्यादेशो भवति । [17]ऋकारादौ ऌकारादौ सुब्धातौ परे तु विकल्पेन ।

i.

| अ + ऋ = आर् | अ + ऌ = आल् |
|---|---|

- उप + ऋच्छति

  उप् + आर् + च्छति = *उपार्च्छति । (अ + ऋ = आर्)

- प्र + ऋषभीयति

  प्र् + आर् + षभीयति = प्रार्षभीयति । (अ + ऋ = आर्)

  (प्रर्षभीयति - वृद्ध्यभावे गुणः)

---

15. आकारान्तादुपसर्गात्परः ऋकारादिः ऌकारादिश्च धातुः दुर्लभः ।
16. उपसर्गादृति धातौ - ६.१.९१ अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात् ।
17. वा सुप्यापिशलेः - ६.१.९२ अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशो वा स्यात् ।

* प्रैषः, प्रैष्यः इत्येतद्द्वयं विहाय उपार्च्छति इत्यारभ्य सुखार्तः इत्यन्तं यावद् गुणः प्राप्तः । गुणापवादत्वेन वृद्धिर्विहिता । प्रैषः प्रैष्यः इत्यत्र तु पररूपं प्राप्तम् । तस्यापवादत्वेन वृद्धिर्विहिता । एषः एष्यः इत्यनयोः धातुनिष्पन्नत्वात् पररूपं प्राप्तम् ।

18. 'अक्षादूहिन्यामुपसंख्यानम्' (वा) - अक्षशब्दाद् ऊहिनीशब्दे परे वृद्धिरेकादेशः स्यात् ।

- उप + ऌकारीयति

उप् + आल् + कारीयति = उपाल्कारीयति । (अ + ऌ = आल्)
(उपल्कारीयति - वृद्ध्यभावे गुणः)

**विशेषः**

i. अधोनिर्दिष्टेषु पूर्वपरयोः स्थाने वृद्धिः भवति -

| | |
|---|---|
| [18]अक्ष + ऊहिनी = अक्षौहिणी । | [19]स्व + ईरः = स्वैरः । |
| स्व + ईरिन् = स्वैरी । | स्व + ईरिणी = स्वैरिणी । |
| [20]प्र + ऊहः = प्रौहः । | प्र + ऊढः = प्रौढः । |
| प्र + ऊढिः = प्रौढिः । | प्र + एषः = प्रैषः । |
| प्र + एष्यः = प्रैष्यः । | [21]प्र + ऋणम् = प्रार्णम् । |
| वत्सतर + ऋणम् = वत्सतरार्णम् । | कम्बल + ऋणम् = कम्बलार्णम् । |
| वसन + ऋणम् = वसनार्णम् । | दश + ऋणः = दशार्णः । |
| ऋण + ऋणम् = ऋणार्णम् । | दशार्णा (नदी) |

ii. [22]'अ आ' इत्येताभ्यां ऋतशब्दे परे पूर्वपरयोः स्थाने आर् आदेशो भवति, एष आदेशः तृतीयासमासे एव । यथा - सुख + ऋतः = सुखार्तः । अत्र सुखेन ऋतः इति विग्रहः । परम + ऋतः = परमर्तः इत्यत्र तु परमश्चासौ ऋतश्चेति विग्रहः । अतोऽत्र गुण एव, न वृद्धिः ।

## ५. सवर्णदीर्घसन्धिः

सवर्णदीर्घाः = आ ई ऊ ॠ

| अ आ | इ ई | उ ऊ | ऋ |
|---|---|---|---|
| आ | ई | ऊ | ॠ |

\+ सवर्णस्वरः

[23]'अ आ' इत्येताभ्याम् 'अ आ' इत्येतयोः परयोः आकारः, 'इ ई' इत्येताभ्याम्

---

19. 'स्वादीरेरिणोः' (वा) - स्वशब्दाद् ईरशब्दे ईरिन्शब्दे च परे वृद्धिरेकादेशः स्यात् ।
20. 'प्रादूहोढोढ्येषैष्येषु' (वा) - प्र इत्युपसर्गाद् ऊह, ऊढ, ऊढि, एष, एष्य इत्येतेषु परेषु वृद्धिरेकादेशः स्यात् ।
21. 'प्रवत्सतरकम्बलवसनदशार्णानामृणे' (वा) - प्र, वत्सतर, कम्बल, वसन, दश, ऋण इत्येतेभ्यः ऋणशब्दे परे वृद्धिरेकादेशः स्यात् ।
22. 'ऋते च तृतीयासमासे' (वा) - तृतीयासमासे अकाराद् ऋतशब्दे परे वृद्धिरेकादेशः स्यात् ।
23. अकः सवर्णे दीर्घः - ६.१.१०१ अकः सवर्णेऽचि परे दीर्घ एकादेशः स्यात् ।

'इ ई' इत्येतयोः परयोः ईकारः, 'उ ऊ' इत्येताभ्याम् 'उ ऊ' इत्येतयोः परयोः ऊकारः, 'ऋ' इत्यस्मात् 'ऋ ऌ' इत्येतयोः परयोः ऋकारः, पूर्वपरयोः स्थाने एकादेशो भवति ।

१. अ/आ + अ/आ = आ

- परम + अर्थः
  परम् + आ + र्थः = परमार्थः । (अ + अ = आ)
- देव + आलयः
  देव् + आ + लयः = देवालयः । (अ + आ = आ)
- विद्या + अभ्यासः
  विद्य् + आ + भ्यासः = विद्याभ्यासः । (आ + अ = आ)
- विद्या + आलयः
  विद्य् + आ + लयः = विद्यालयः । (आ + आ = आ)

२. इ/ई + इ/ई = ई

- कवि + इन्द्रः
  कव् + ई + न्द्रः = कवीन्द्रः । (इ + इ = ई)
- कवि + ईश्वरः
  कव् + ई + श्वरः = कवीश्वरः (इ + ई = ई)
- पृथिवी + इन्दुः
  पृथिव् + ई + न्दुः = पृथिवीन्दुः । (ई + इ = ई)
- मही + ईशः
  मह् + ई + शः = महीशः । (ई + ई = ई)

३. उ/ऊ + उ/ऊ = ऊ

- भानु + उदयः
  भान् + ऊ + दयः = भानूदयः । (उ + उ = ऊ)
- साधु + ऊचुः
  साध् + ऊ + चु = साधूचुः । (उ + ऊ = ऊ)
- वधू + उत्साहः
  वध् + ऊ + त्साहः = वधूत्साहः । (ऊ + उ = ऊ)
- वधू + ऊर्मिका
  वध् + ऊ + र्मिका = वधूर्मिका । (ऊ + ऊ = ऊ)

---

24. सवर्णे परे पूर्वत्र ऋकारस्य ऌकारस्य वा प्रसक्तिः दुर्लभा । नास्त्येव वा । तथैव ऋकारात्परः ऋकारोऽपि दुर्लभः । कृ + ऋकारः इत्येवमादिकं तु कल्पनामात्रमेव ।

४. [24]ऋ + ऋ/ऌ = ॠ

- पितृ + ऋणम्

  पित् + ॠ + णम् = पितॄणम् (ऋ + ऋ = ॠ)

- होतृ + ऌकारः

  होत् + ॠ + कारः = होतॄकारः । (ऋ + ऌ = ॠ)

अन्यान्युदाहरणानि -

| | |
|---|---|
| अल्प + अपराधः = अल्पापराधः | रस + आस्वादः = रसास्वादः |
| विद्या + अभ्यासः = विद्याभ्यासः | विद्या + आलयः = विद्यालयः |
| मुनि + इन्द्रः = मुनीन्द्रः | कवि + ईश्वरः = कवीश्वरः |
| श्री + ईशः = श्रीशः | गुरु + उपदेशः = गुरूपदेशः |
| गुरु + ऊधः = गुरूधः | पितृ + ऋणम् = पितॄणम् |
| होतृ + ऋकारः = होतॄकारः | न + अन्यथा = नान्यथा |
| मधुर + अक्षरम् = मधुराक्षरम् | तस्य + आत्मजः = तस्यात्मजः |
| दैत्य + अरिः = दैत्यारिः | विद्या + आतुरः = विद्यातुरः |
| अस्ति + इदम् = अस्तीदम् | दशमी + इति = दशमीति |
| दर्भ + आसनम् = दर्भासनम् | अद्य + अपि = अद्यापि |

## ६. पूर्वरूपसन्धिः

पूर्वरूपम् = ए ओ

| ए | ओ |
|---|---|
| ए | ओ |

\+ अ

[25]पदान्ताद् एकाराद् अकारे परे एकारः, पदान्ताद् ओकाराद् अकारे परे ओकारः च पूर्वपरयोः स्थाने एकादेशो भवति ।

i. ए + अ = ए

अन्ते + अपि

अन्त् + ए + पि = अन्तेऽ*पि । (ए + अ = ए)

ii. ओ + अ = ओ

सो + अयम्

स् + ओ + यम् = सोऽयम् । (ओ + अ = ओ)

25. एङः पदान्तादति - ६.१.१०९ पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् ।

* 'ऽ' इदं चिह्नं स्पष्टप्रतिपत्तये लिख्यते । पाणिनिना तु न विहितम् ।

अन्यान्युदाहरणानि -

| | |
|---|---|
| ते + अत्र = तेऽत्र | सो + अवदत् = सोऽवदत् |
| को + अपि = कोऽपि | गृहे + अहम् = गृहेऽहम् |
| मात्रे + अर्पितम् = मात्रेऽर्पितम् | रामो + अहसत् = रामोऽहसत् |
| हरे + अव = हरेऽव | मृगो + अस्ति = मृगोऽस्ति |
| गोविन्दो + अतिथिः = गोविन्दोऽतिथिः | मार्गे + अन्यः = मार्गेऽन्यः |
| दीर्घे + अहनि = दीर्घेऽहनि | मे + अन्तिके = मेऽन्तिके |
| सुन्दरे + अम्बरे = सुन्दरेऽम्बरे | रमे + अम्बिके = रमेऽम्बिके |

### इदमवधेयम्

i. यान्तवान्तादेशसन्धेः अयम् अपवादः ।

ii. [26]समासे गोशब्दात् ह्रस्वाकारे परे प्रकृतिभावः, पूर्वरूपम्, 'अव' इत्यादेशः च भवति, अकारं विहाय अन्येषु स्वरेषु परेषु ओकारस्य अव इति, अव् इति च आदेशो भवति । यथा -

- गो + अग्रम् = गो अग्रम्/गोऽग्रम्/गवाग्रम् ।
  गो + अजिनम् = गो अजिनम्/गोऽजिनम्/गवाजिनम् ।
- गो + उष्ट्रम् = गवोष्ट्रम्/गवुष्ट्रम् ।
- गो + ओदनम् = गवौदनम्/गवोदनम्
  गवाक्षः, गवेन्द्रः इत्यत्र तु नित्यम् अवादेशो भवति ।

## ७. पररूपसन्धिः

**७.१.**

| | |
|---|---|
| अ | ए |
| ए | ओ |

\+ ओ

[27]अवर्णान्तादुपसर्गाद् एकारादौ धातौ परे 'एकारः', ओकारादौ धातौ परे 'ओकारः' पूर्वपरयोः स्थाने एकादेशो भवति । वृद्धेरयम् अपवादः ।

i. **अ + ए = ए**

प्र + एजते

प्र् + ए + जते = प्रेजते । (अ + ए = ए)

---

26. सर्वत्र विभाषा गोः - ६.१.१२२ लोके वेदे च एङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते । अवङ् स्फोटायनस्य - ६.१.१२३ अचि परे पदान्ते गोरवङ् वा स्यात् । इन्द्रे च - ६.१.१२४ गोरवङ् स्यादिन्द्रे ।
27. एङि पररूपम् - ६.१.९४ अवर्णान्तादुपसर्गादेङादौ धातौ परे पररूपमेकादेशः स्यात् ।

ii. | अ + ओ = ओ |

उप + ओषति

उप् + ओ + षति = उपोषति । (अ + ओ = ओ)

अस्यापवादः -

[28]एकारादौ इण्धातौ एध्धातौ च परे पररूपं न । किन्तु वृद्धिरेव (ऐकारादौ तु पररूपप्राप्तिरेव नास्ति । अतो वृद्धिः स्वयं सिद्धा) यथा -

उप + एति = उपैति

प्र + एधते = प्रैधते ।

**विशेषः** - i. पूर्वोक्तनिमित्ताभावेऽपि वक्ष्यमाणेषु पररूपं प्रवर्तते इति ज्ञेयम् ।

१. [29]शक + अन्धुः = शकन्धुः । २. कर्क + अन्धुः = कर्कन्धुः (अन्धुः = कूपः) ३. कुल + अटा = कुलटा । ४. हल + ईषा = हलीषा । लाङ्गल + ईषा = लाङ्गलीषा । ६. मार्त + अण्डः = मार्तण्डः । [30]सीमा + अन्तः = सीमन्तः । केशवेशे इत्यर्थे एव पररूपम् । सीमान्तः इत्यत्र तु सवर्णदीर्घः । मनस् + ईषा = मनीषा (अस् + ई = ई) पतत् + अञ्जलिः = पतञ्जलिः (अत् + अ = अ)

ii. [31]अवर्णान्तात् ओतुशब्दे ओष्ठशब्दे च परे पररूपं विकल्पेन भवति समासे एव । यथा -

स्थूल + ओतुः = स्थूलोतुः/स्थूलौतुः

बिम्ब + ओष्ठः = बिम्बोष्ठः/बिम्बौष्ठः

| ७.२. | अ/आ + ओम् आ(ङ्) |

[32]अकारान्ताद् आकारान्ताद्वा शब्दाद् ओम् इति परे ओकारः, आ(ङ्) इति परे तु (आङ् इत्युपसर्ग एव भवेत् ।) (आ + इ = ए) एकारः (आ + उ = ओ) ओकारः वा, पूर्वपरयोः स्थाने एकादेशः स्यात् । अयमपि वृद्धेरपवादः ।

i. | अ/आ + ओम् = ओ(म्) |

- शिवाय + ओं नमः

---

28. एत्येधत्यूठ्सु - ६.१.८९ अवर्णादिजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात् ।
29. शकन्ध्वादिषु पररूपं वाच्यम् (वा) ।
30. सीमन्तः केशवेशे (वा)
31. ओत्वोष्टयोः समासे (वा) ।
32. ओमाङोश्च - ६.१.९५ ओमि आङि च आत्परे पररूपमेकादेशः स्यात् ।

शिवाय् + ओं + नमः = शिवायों नमः । [अ + ओ(म्) = ओ(म्)]

- का + ओमिति वदति

  क् + ओ + मिति वदति = कोमिति वदति । [(ओ + ओ(म्) = ओ(म्)]

ii. अ/आ + आ(ङ्) = ए/ओ

- शिव + आ + इहि

  शिव + (ए + हि =) एहि - गुणसन्धिः

  शिव + एहि (अत्र एकारे [33]आङ्त्वमस्तीति विभावनीयम्)

  शिव् + ए + हि = शिवेहि । [अ + ए (आङ्) = ए]

- सदा + आ + इहि

  सदा + (ए + हि =) एहि (गुणः)

  सदा + एहि ([33]आङ्त्वमस्ति)

  सद् + ए + हि = सदेहि । [आ + ए (आङ्) = ए]

- अद्य + आ + ऊढा

  अद्य + (ओ + ढा =) ओढा (गुणः)

  अद्य + ओढा ([33]आङ्त्वमस्ति)

  अद्य + ओ + ढा = अद्योढा [अ + ओ(आङ्) = ओ]

- कदा + आ + ऊढा

  कदा + (ओ + ढा =) ओढा (गुणः)

  कदा + ओढा ([33]आङ्त्वमस्ति)

  कद् + ओ + ढा = कदोढा । [आ + ओ (आङ्) = ओ]

## ८. प्रकृतिभावः

निमित्ते सत्यपि सन्धिकार्याभावः प्रकृतिभावः । स्वभावेन अवस्थितिः प्रकृतिभावः इत्यर्थः । प्रकृत्या = स्वभावेन, भावः = अवस्थितिः । यथा - हरी एतौ इत्यत्र यणो निमित्तस्य सद्भावेऽपि यण् न प्रवर्तते ।

**८.१.** i. [34]पदान्ते विद्यमानानाम् अ आ इ ई उ ऊ ऋ इत्येतेषाम् (अकः) ऋकारे परे प्रकृतिभावो विकल्पेन भवति, प्रकृतिभावपक्षे सति दीर्घस्वरे स ह्रस्वो भवति । समासेऽपि प्रकृतिभावोऽयं प्रवर्तते ।

ii. [35]पदस्यान्ते विद्यमानस्य इकः असवर्णेऽचि परे यणादेशः विकल्पेन भवति ।

---

33. अन्तादिवच्च - ६.१.८५ योऽयमेकादेशः स पूर्वस्यान्तवत् परस्यादिवत्स्यात् ।

34. ऋत्यकः - ६.१.१२८ पदान्ताद् अकः ऋति परे प्रकृत्या स्युः, ह्रस्वश्च वा । समासेऽपि अयं प्रकृतिभावः ।

35. इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च - ६.१.१२७ पदान्ताद् इकोऽसवर्णेऽचि परे प्रकृत्या स्युः ह्रस्वश्च वा । न समासे ।

यणभावे प्रकृतिभावः, सति दीर्घे स ह्रस्वश्च भवति । समासे तु नायं प्रकृतिभावः ।

i. - राजा + ऋषिः । (इमे भिन्ने पदे)
राज + ऋषिः = राज ऋषिः ।
राजर्षिः । (गुणसन्धिः)
- राज + ऋषिः = राज ऋषिः । (इदं समस्तं पदम्)
राजर्षिः । (गुणः)
- वसन्त + ऋतुः = वसन्तऋतुः (स. प.)
वसन्तर्तुः (गुण)
- वर्षा + ऋतुः
वर्ष + ऋतुः = वर्षऋतुः (स. प.)
वर्षर्तुः । (गुणः)
- दधि + ऋते = दधि ऋते
दध्यृते । (यण्)
- स्त्री + ऋणम्
स्त्रि + ऋणम् = स्त्रि ऋणम् (स. प.)
स्त्यृणम् । (यण्)
- गुरु + ऋणम् = गुरुऋणम् (स. प.)
गुर्वृणम् । (यण्)
- वधू + ऋणम्
वधु + ऋणम् = वधुऋणम् (स. प.)
वध्वृणम् । (यण्)
- पितृ + ऋणम् = पितृ ऋणम् (स. प.)
पितॄणम् । (सवर्णदीर्घः)

ii. - दधि + अत्र = दधि अत्र
दध्यत्र । (यण्)
- चक्री + अत्र
चक्रि + अत्र = चक्रि अत्र
चक्र्यत्र (यण्)

---

36. प्लुतप्रगृह्या अचि नित्यम् - ६.१.१२५ प्लुताः प्रगृह्याश्च अचि परे नित्यं प्रकृत्या स्युः ।
37. दूराद्धूते च - ८.२.८४ दूरात्सम्बोधने यद्वाक्यं तस्य टेः प्लुतः स्यात् ।

## ८.२. प्लुतप्रकृतिभावः ।

[36]प्लुतस्य स्वरे परे नित्यं प्रकृतिभावो भवति । प्लुतः कुत्र प्रयोक्तव्यः इति शास्त्रेणैव ज्ञातव्यम् । प्लुतविधायकानि सूत्राणि बहूनि सन्ति । तेषु एकस्यैवार्थोऽत्र दीयते । तथाहि -

[37]दूरात्सम्बोधने यद्वाक्यं तस्य वाक्यस्य अन्तिमः स्वरः (व्यञ्जनान्तं चेत् व्यञ्जनात्पूर्वस्थितः) प्लुतो भवति । वाक्यस्यान्ते यत्र सम्बोधनं भवति तत्रैव अयं प्लुतः । प्लुतः वाक्यसम्बन्धीति स्मरणीयम् ।

- आगच्छकृष्ण३ + अत्र गौश्चरति = आगच्छकृष्ण३ अत्र गौश्चरति ।
- गच्छ गौरि३ + असौ तत्रास्ति = गच्छ गौरि३ असौ तत्रास्ति ।
- तिष्ठ वधु३ + एषाप्यागच्छति = तिष्ठ वधु३ एषाप्यागच्छति ।
- शृणु हरे३ + अत्रेयं गोपी = शृणु हरे३ अत्रेयं गोपी ।
- पश्य गुरो३ + एष मां ताडयति = पश्य गुरो३ एष मां ताडयति ।

## ८.३. प्रगृह्यप्रकृतिभावः ।

प्रगृह्यस्य स्वरे परे नित्यं प्रकृतिभावो भवति ।

प्रगृह्यं नाम काचन संज्ञा । इदं च प्रगृह्यं कुत्र प्रवर्तते इति शास्त्रेणैव ज्ञातव्यम् । केषाञ्चनसूत्राणामर्थः सङ्गृह्यते । तथाहि -

i. [38]ईकारान्तं ऊकारान्तं एकारान्तं च द्विवचनं प्रगृह्यं भवति ।

ii. [39]'अमी' इत्यस्य ईकारः प्रगृह्यः भवति ।

iii. [40]ओकारान्तम् अव्ययम्, आ[41]इत्यव्ययञ्च (आङ् इति, आ इति द्वे स्तः, तयोर्मध्ये 'आ' इत्यव्ययमेव) प्रगृह्यं भवति ।

- कवी + एतौ = कवी एतौ । (नात्र यण् ।)
- गुरू + इमौ = गुरू इमौ । (नात्र यण् ।)
- लते + एते = लते एते । (नात्र यान्तादेशः ।)
- पचेते + इमौ = पचेते इमौ । (नात्र यान्तादेशः ।)
- अमी + आश्रमाः = अमी आश्रमाः । (नात्र यण् ।)
- अहो + अत्रभवान् = अहो अत्र भवान् । (नात्र पूर्वरूपम् ।)
- आ + एवं नु मन्यसे = आ एवं नु मन्यसे । (नात्र वृद्धिः ।)

**स्वरसन्धिसङ्ग्रहार्थं ४९ तमं पृष्ठं पश्यन्तु ।**

---

38. ईदूदेद्द्विवचनं प्रगृह्यम् - १.१.११ ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात् ।
39. अदसोमात् - ११.१२ अस्मात्परावीदूतौ प्रगृह्यौ स्तः ।
40. ओत् - १.१.१५ ओदन्तो निपातः प्रगृह्यः स्यात् ।
41. निपात एकाजनाङ् - १.१.१४ एकोऽज् निपातः आङ्वर्ज्यः प्रगृह्यः स्यात् ।

# ४. व्यञ्जनसन्धिः

**१. श्चुत्वसन्धिः** [1]श्चुः - श् च् छ् ज् झ् ञ् ।

[2]सकारस्य शकारचवर्गाभ्यां योगे[3]सकारस्य शकारः, तवर्गस्य शकारचवर्गाभ्यां योगे तवर्गस्य क्रमात् चवर्गः आदेशो भवति ।

i. | स् + (श्/चवर्गः) = श् |

- शिशुस् + शेते
  शिशु + श् + शेते = शिशुश्शेते । (स् = श्)
- मनस् + चञ्चलम्
  मन + श् + चञ्चलम् = मनश्चञ्चलम् (स् = श्)
- रामस् + छात्रः
  राम + श् + छात्रः = रामश्छात्रः । (स् = श्)

ii. | तवर्गः + (श/चवर्गः) = चवर्गः |

- भगवत् + शक्तिः
  भगव + च् + शक्तिः = भगवच्शक्तिः । (त् = च्)
- सत् + चित्
  स + च् + चित् = सच्चित् । (त् = च्)
- सुहृद् + जगाम
  सुहृ + ज् + जगाम = सुहृज्जगाम । (द् = ज्)
- हे गुणिन् + जानातु
  हे गुणि + ञ् + जानातु = हे गुणिञ्जानातु । (न् = ञ्)

iii. | चवर्गः + तवर्गः = चवर्गः |

- यज् + नः
  यज् + ञ् + अः = यज्ञः । (न् = ञ्)

---

1. चु = चवर्गः । अक्षरप्रकरणे पञ्चमं पृष्ठं पश्यन्तु ।
2. स्तोश्चुना श्चुः - ८.४.४० सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः ।
3. योगः = सम्बन्धः । अतः सकारतवर्गाभ्यां परौ एव शकारचवर्गौ भवेतामिति न नियमः । चवर्गात्परोऽपि तवर्गः स्यात् । ष्टुत्वसन्धावपि एवमेव अवधेयम् । एवञ्च श्चुत्वसन्धौ ष्टुत्वसन्धौ च एताभ्याम् एतयोः परयोरिति न चिन्तनीयम् । किन्तु द्वयोः सम्बन्धः । सम्बन्धः पूर्वत्र स्थितेऽपि भवति, परत्र स्थितेऽपि ।

- याच् + ना

  याच् + ञ् + आ = याच्ञा । (न् = ञ्)

**विशेषः**

सत् + चित् → सद् + चित् → सज् + चित् → सच् + चित् = सच्चित् । सद् + चित् इति जश्त्वे, सज् + चित् इति श्चुत्वे, सच् + चित् इति चर्त्वे च कृते सच्चित् इति सिद्धं भवति । एषः शास्त्रीयः क्रमः । सत् + चित् = सच्चित् इति श्चुत्वे कृते अपि फले भेदः न भवति । अतः सत् + चित् इति विभज्य अत्र प्रदर्शितम् । उत्तरत्रापि हल्सन्धिषु अस्माभिः विभज्य प्रदर्शितस्य, शास्त्रीयक्रमेण विभजनीयस्य च सूक्ष्मः भेदः सम्भवति । किन्तु सन्धौ कृते फलभेदो नास्तीति सौलभ्याय एषा सरणिः आदृता ।

अन्यान्युदाहरणानि -

| | |
|---|---|
| हरिस् + शेते = हरिश्शेते | रामस् + च = रामश्च |
| सत् + चिद्रूपम् = सच्चिद्रूपम् | तद् + ज्वलति = तज्ज्वलति |
| गुणिन् + जयः = गुणिञ्जयः | उद् + ज्वलम् = उज्ज्वलम् |
| बृहत् + छत्रम् = बृहच्छत्रम् | तत् + च = तच्च |
| अन्यत् + च = अन्यच्च | शार्ङ्गिन् + जय = शार्ङ्गिञ्जय |
| तपस् + चर्या = तपश्चर्या | कियत् + चिरम् = कियच्चिरम् |
| मृत् + शकटिका = मृच्छकटिका | सकृत् + चर्वणम् = सकृच्चर्वणम् |
| उद् + जीवनम् = उज्जीवनम् | भूभृत् + चलति = भूभृच्चलति |
| तत् + चिन्त्यम् = तच्चिन्त्यम् | बृहत् + छिद्रम् = वृहच्छिद्रम् |
| एतद् + ज्ञात्वा = एतज्ज्ञात्वा | प्रतिपत् + चन्द्रः = प्रतिपच्चन्द्रः |

**अपवादः** - [4]शकारात्परस्य चुत्वं न भवति । यथा -

विश् + नः = विश्नः । प्रश् + नः = प्रश्नः ।

## २. ष्टुत्वसन्धिः

ष्टु = ष् ट् ठ् ड् ढ् ण्

[5]सकारस्य षकारटवर्गाभ्यां योगे सकारस्य षकारः, तवर्गस्य षकारटवर्गाभ्यां योगे तवर्गस्य क्रमात् चवर्गः आदेशो भवति ।

i. स् + (ष/टवर्गः) = ष्

- बालस् + षष्ठः

  बाल + ष् + षष्ठः = बालष्षष्ठः । (स् = ष्)

---

4. शात् - ८.४.४४ शात्परस्य तवर्गस्य चुत्वं न स्यात् ।
5. ष्टुना ष्टुः - ८.४.४१ स्तोः ष्टुना योगे ष्टुः स्यात् ।

- टवर्गस् + टादिः
  टवर्ग + ष् + टादिः = टवर्गष्टादिः । (स् = ष्)
- धनुस्+ ठङ्कारः
  धनु + ष् + ठङ्कार = धनुष्ठङ्कारः (स् = ष्)

ii. तवर्गः + (टवर्गः) = टवर्गः

- बृहत् + टीका
  बृह + ट् + टीका = बृहट्टीका । (त् = ट्)
- तद् + डमरुः
  त + ड् + डमरुः = तड्डमरुः । (द् = ड्)
- एतद् + ढक्का
  एत + ड् + ढक्का = एतड्ढक्का । (द् = ड्)
- चक्रिन् + ढौकसे
  चक्रि + ण् + ढौकसे = चक्रिण्ढौकसे । (न् = ण्)

iii. (ष) + तवर्गः = टवर्गः

- आकृष् + तः
  आकृष् + ट् + अः = आकृष्टः । (त् = ट्)
- इष् + तः
  इष् + ट् + अः = इष्टः । (त् = ट्)

iv. (टवर्गः) + तवर्गः = टवर्गः

- षण् + नाम्
  षण् + ण् + आम् = षण्णाम् (न् = ण्)
- षण् + नवतिः
  षण् + ण् + नवतिः = षण्णवतिः । (न् = ण्)
- षण् + नगर्यः
  षण् + ण् + नगर्यः = षण्णगर्यः (न = ण्)

अन्यान्युदाहरणानि -

तत् + टीका = तट्टीका
शरद् + डम्बरः = शरड्डम्बरः
उत् + टङ्कनम् = उट्टङ्कनम्
पक्षिन् + टिट्टिभ ! = पक्षिण्टिट्टिभ !
बहद् + डिण्डिमः = बृहड्डिण्डिमः
कतमस् + टकारः = कतमष्टकारः
सत् + टिप्पणी = सट्टिप्पणी
उद् + डयनम् = उड्डयनम्

स्याद् + ढक्का = स्याड्ढक्का पतद् + डिम्भः = पतड्डिम्भः
मरुद् + डिण्डिमः = मरुड्डिण्डिमः असकृद् + डयनम् = असकृड्डयनम्
बृहत् + टङ्कशाला = बृहट्टङ्कशाला भयकृद् + डामरः = भयकृड्डामरः

अपवादः - i. [6]तवर्गस्य षकारे ष्टुत्वं न भवति ।
यथा - भवान् + षष्ठः = भवान् षष्ठः । अत्र नकारस्य णकारादेशो न ।
ii. [7]नाम्-नवति-नगरीन् वर्जयित्वा पदान्तात् टवर्गात्परस्य सकारस्य तवर्गस्य च ष्टुत्वं न भवति । यथा -
षट् + सन्तः = षट्सन्तः । अत्र सकारस्य षकारादेशो न ।
षट् + तरुणाः = षट् तरुणाः । अत्र तकारस्य टकारादेशो न ।
मधुलिड् + दीनः = मधुलिड्दीनः । अत्र दकारस्य डकारादेशो न ।

## ३. जश्त्वसन्धिः जश् = ज् ब् ग् ड् द्

[8]ञमङणनान् वर्जयित्वा पदान्ते स्थितानां वर्गीयव्यञ्जनानां,[9] स्वरे मृदुव्यञ्जने च (हशि) परे तत्तद्वर्गीयतृतीयव्यञ्जनम् आदेशो भवति । अवसाने तु तत्तद्वर्गीयं [10]प्रथमं तृतीयं वा व्यञ्जनम् आदेशो भवति । षकारस्यापि डकारो भवति, अवसाने तु टकारो डकारो वा ।

i. **वर्गीयव्यञ्जनानि + (स्वरः) = जश्**

- वाक् + ईशः
  वा + ग् + ईशः = वागीशः । (क् = ग्)
- अच् + अन्तः
  अ + ज् + अन्तः = अजन्तः । (च् = ज्)
- मधुलिट् + अस्ति
  मधुलि + ड् + अस्ति = मधुलिडस्ति । (ट् = ड्)

---

6. तोः षि - ८.४.४३ तवर्गस्य षकारे परे न ष्टुत्वम् ।
7. न पदान्ताट्टोरनाम् - ८.४.४२ पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात् ।
8. झलां जशोऽन्ते - ८.२.३९ पदान्ते झलां जशः स्युः ।
9. झल्प्रत्याहारे श स ह् इति वर्णाः अपि प्रविष्टाः । उपर्युक्तनियमे एते वर्णाः नान्तर्भूताः । कुतः ? पदान्ते स्थितस्य शकारस्य सकारस्य हकारसय च क्रमात् षकारस्य रुकारस्य ढकारस्य च 'व्रश्च...' इति, 'ससजुषोरुः' इति, 'होढः' इति च सूत्रैः विधानात् साक्षात् जश्त्वप्रसक्तिः नास्ति । अतः ते वर्णाः नियमे त्यक्ताः । प्रत्याहारघटकाः सर्वे वर्णाः यदि नियमे न स्युः तदा इत्थम् एव चिन्तितम् इति विभावनीयम् ।
10. वाऽवसाने - ८.४.५६ अवसाने झलां चरो वा स्युः ।

- जगत् + ईशः
  जग + द् + ईशः = जगदीशः । (त् = द्)
- सुप् + अन्तम्
  सु + ब् + अन्तम् = सुबन्त । (प् = ब्)

ii. **वर्गीयव्यञ्जनानि + [मृदुव्यञ्जनम्(हश् )] = जश्**

- वाक् + व्यवहारः
  वा + ग् + व्यवहारः = वाग्व्यवहारः ।
- अच् + वर्णः
  अ + ज् + वर्णः = अज्वर्णः । (च् = ज्)
- मधुलिट् + डयते
  मधुलि + ड् + डयते = मधुलिड्डयते । (ट् = ड्)
- महत् + यशः
  मह + द् + यशः = महद्यशः । (त् = द्)
- सुप् + विभक्तिः
- सु + ब् + विभक्तिः = सुब्विभक्तिः । (प् = ब्)

iii. **वर्गीयव्यञ्जनानि = जश्**

वाक् / वाग्
अच् / अज्
लिट् / लिड्
मरुत् / मरुद्
ककुप् / ककुब्

iv. **ष् = ड्**

- षष् + भ्याम्
  ष + ड् + भ्याम् = षड्भ्याम् । (ष् = ड्)

अन्यान्युदाहरणानि -

वाक् + देवता = वाग्देवता
उत् + गमः = उद्गमः
तत् + यथा = तद्यथा
षष् + आननः = षडाननः
सत् + गुणः = सद्गुणः
स्वर्गात् + अपि = स्वर्गादपि

षष् + दर्शनानि = षड्दर्शनानि
तत् + अपि = तदपि
अप् + जम् = अब्जम्
जगत् + गुरुः = जगद्गुरुः
अप् + धिः = अब्धिः
महत् + इदम् = महदिदम्

अस्मात् + वचनात् = अस्माद्वचनात्
प्राक् + एव = प्रागेव
तावत् + एनम् = तावदेनम्
सम्यक् + अभिहितम् = सम्यगभिहितम्

## ४. चर्त्वसन्धिः

[11]ञमङणनान् वर्जयित्वा वर्गीयव्यञ्जनानां कर्कशव्यञ्जने (खरि) परे तत्तद्वर्गीय-प्रथमव्यञ्जनम् आदेशो भवति ।

i. | वर्गीयव्यञ्जनानि + (कर्कशव्यञ्जनानि) = क् च् ट् त् प् |

- दिग् + पालः
  दि + क् + पालः = दिक्पालः (ग् = क्)
- विराड् + पुरुषः
  विरा + ट् + पुरुषः = विराट्पुरुषः । (ड् = ट्)
- विपद् + कालः
  विप + त् + कालः = विपत्कालः । (द् = क्)
- अनुष्टुभ् + छन्दः
  अनुष्टु + प् + छन्दः = अनुष्टुप्छन्दः । (भ् = प्)

अन्यान्युदाहरणानि -

अस्मद् + पुत्रः = अस्मत्पुत्रः
सम्पद् + पुत्रः = सम्पत्पुत्रः
उद् + पतति = उत्पतति
तादृग् + कर्म = तादृक्कर्म
विश्वराड् + कुत्र = विश्वराट्कुत्र
तुराषाड् + सर्वः = तुराषाट्सर्वः
परिव्राड् + सङ्घः = परिव्राट्सङ्घः
विपद् + प्रतीकारः = विपत्प्रतीकारः
सम्पद् + कुमारः = सम्पत्कुमारः
षड् + खाद्यानि = षट्खाद्यानि
एतद् + पार्श्वम् = एतत्पार्श्वम्
कामधुग् + खादति = कामधुक्खादति
ऋत्विग् + पार्श्वे = ऋत्विक्पार्श्वे
ककुद् + स्थः = ककुत्स्थः

## ५. अनुनासिकसन्धिः

अनुनासिकः = ङ् ञ् ण् न् म्

[12]अनुनासिकव्यञ्जनेषु परेषु पदान्ते स्थितानां वर्गीयव्यञ्जनानां तत्तद्वर्गीयपञ्चमो वर्णो (अनुनासिकः) विकल्पेन आदेशो भवति ।[13]अनुनासिकादौ प्रत्यये परे तु नित्यमेव अनुनासिको भवति ।

---

11. खरि च - ८.४.५५ खरि परे झलां चरः स्युः ।
12. यरोऽनुनासिकेऽनुनासिको वा - ८.४..४५ यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् ।
13. प्रत्यये भाषायां नित्यम् (वा) ।

i. **विकल्पेन** - | वर्गीयव्यञ्जनानि + (अनुनासिकः) = अनुनासिकः |

- वाग् + मूलम्
  वा + ङ् + मूलम् = वाङ्मूलम्/वाग्मूलम् । (ग् = ङ्)
- षड् + मयूखाः
  ष + ण् + मयूखाः = षण्मयूखाः/षड्मयूखाः । (ड् = ण्)
- तद् + नयति
  त + न् + नयति = तन्नयति/तद्नयति (द् = न्)

ii. **नित्यम्** - | वर्गीयव्यञ्जनानि + (प्रत्ययानुनासिकः) = अनुनासिकः |

- चिद् + मयम्
  चि + न् + मयम् = चिन्मयम् (त् = न्)
- तद् + मात्रम्
  त + न् + मात्रम् = तन्मात्रम् (द् = न्)
- अप् + मयम्
  अ + म् + मयम् = अम्मयम् । (प् = म्)

अन्यान्युदाहरणानि -

वाग् + नियमः = वाङ्नियमः
तद् + मङ्गलम् = तन्मङ्गलम्
तस्माद् + मद्यम् = तस्मान्मद्यम्
मद् + निवासः = मन्निवासः
तस्माद् + नागरिकाः = तस्मान्नागरिकाः
त्वग् + मोचनम् = त्वङ्मोचनम्
सम्राड् + मनसि = सम्राण्मनसि
विद्युद् + नगरी = विद्युन्नगरी
जगद् + नाथः = जगन्नाथः
षड् + मुखः = षण्मुखः
तद् + नयनम् = तन्नयनम्
यद् + मण्डलम् = यन्मण्डलम्
सकृद् + नष्टम् = सकृन्नष्टम्
जगद् + नियामकः = जगन्नियामकः
मधुलिड् + नमति = मधुलिण्नमति
दिग् + मध्ये = दिङ्मध्ये
जाग्रत् + नागरिकः = जाग्रन्नागरिकः

## ६. अनुस्वारसन्धिः

अनुस्वारः = ं

**६.१.** [14]व्यञ्जने परे पदान्ते स्थितस्य मकारस्य अनुस्वारो भवति ।

---

14. मोऽनुस्वारः - ८.३.२३ मान्तस्य पदस्य अनुस्वारः स्याद्धलि ।

* वन्दे रामं । कृष्णं अनुसरति - इत्यत्र वाक्यद्वयेऽपि अनुस्वारलेखनं न युक्तम् । उभयत्रापि अग्रे व्यञ्जनस्याभावात् । अनुस्वारसन्धौ व्यञ्जनपरकः एव मकारः अनुस्वारो भवतीति स्मरणीयम् ।

i. म् + (व्यञ्जनानि) = ०

- *रामम् + वन्दे
  राम +० + वन्दे = रामं वन्दे । (म् = ०)
- गुहायाम् + तपति
  गुहाया + ०+ तपति = गुहायां तपति । (म् = ०)

न्यान्युदाहरणानि -

| | |
|---|---|
| हरिम् + श्रयते = हरिं श्रयते | वाक्यम् + शृणोतु = वाक्यं शृणोतु |
| मालायाम् + सूत्रम् = मालायां सूत्रम् | आपणम् + गत्वा = आपणं गत्वा |
| धर्मम् + चर = धर्मं चर | सत्यम् + वद = सत्यं वद |
| सज्जनम् + मानय = सज्जनं मानय | सर्वम् + स्थानम् = सर्वं स्थानम् |
| नगर्याम् + स्थित्वा = नगर्यां स्थित्वा | फलम् + खादित्वा = फलं खादित्वा |
| दुःखम् + त्यज = दुःखं त्यज | पापम् + शान्तम् = पापं शान्तम् |
| पुस्तकम् + पश्य = पुस्तकं पश्य | वाणीम् + वन्दे = वाणीं वन्दे |
| वीणाम् + वादयति = वीणां वादयति | एवम् + कृत्वा = एवं कृत्वा |

६.२ [15]ञमङणनान् वर्जयित्वा वर्गीयव्यञ्जनेषु शषसहेषु च (झलि) परेषु अपदान्ते स्थितस्य नकारस्य मकारस्य च अनुस्वारो भवति ।

i. न् + (वर्गीयव्यञ्जनम्/शषसह) = ०

- यशान् + सि
  यशा + ० + सि = यशांसि । (न् = ०)

ii. म् + (वर्गीयव्यञ्जनम्/शषसह ) = ०

- आक्रम् + स्यते
  आक्र + ० + स्यते = आक्रंस्यते । (म् = ०)

## ७. परसवर्णसन्धिः

परसवर्णः = ङ् ञ् ण् न् म् यँ लँ वँ

७.१. [16]अनुस्वारस्य वर्गीयव्यञ्जनेषु (यथि) परेषु तत्तद्वर्गस्य पञ्चमो वर्णः आदेशो भवति, यवले परे तु यँ वँ लँ इत्यादेशो भवति । [17]पदान्ते स्थितस्य अनुस्वारस्य तु विकल्पेन आदेशो भवति ।

---

15. नश्चापदान्तस्य झलि - ८.३.२४ नस्य मस्य चापदान्तस्य झल्यनुस्वारः स्यात् ।
16. अनुस्वारस्य ययि परसवर्णः - ८.४.५८ अनुस्वारस्य ययि परे परसवर्णः स्यात् ।
17. वा पदान्तस्य - ८.४.५९ पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् ।

i. **नित्यम्** - | अनुस्वारः + (वर्गीयव्यञ्जनानि) = ङ् ञ् ण् न् म् |

- अं + कितः
  अ + ङ् + कितः = अङ्कितः । (० = ङ्)
- मुं + चति
  मु + ञ् + चति = मुञ्चति । (० = ञ)
- मुं + डनम्
  मु + ण् + डनम् = मुण्डनम् (०= ण्)
- नं + दति
  न + न् + दति = नन्दति (० = न्)
- कं + पते
  क + म् + पते = कम्पते । (० = म्)

ii. **विकल्पः** -

| अनुस्वारः + (वर्गीयव्यञ्जनानि/य व ल) = ङ् ञ् ण् न् म्/यँ् वँ् लँ् |

- त्वं + करोषि
  त्व + ङ् + करोषि = त्वङ्करोषि/त्वंकरोषि (० = ङ्)
- * सं + पृक्तौ
  स + म् + पृक्तौ = सम्पृक्तौ/संपृक्तौ (० = म्)
- सं + यमः
  स + यँ् + यमः = सँय्यमः/संयमः (० = यँ्)
- सं + वत्सरः
  स + वँ् + त्सरः = सवँ्वत्सरः/ संवत्सरः (० = वँ्)
- सं + लापः
  स + लँ् + लापः = सल्लँापः/ संलापः (० = लँ्)

अन्यान्युदाहरणानि -

अं + बरम् = अम्बरम्
इं + गितम् = इङ्गितम्
प्रें + खा = प्रेङ्खा
पं + जरम् = पञ्जरम्
कं + टकम् = कण्टकम्
मं + दिरम् = मन्दिरम्

अं + कनम् = अङ्कनम्
अं + घ्रिः = अङ्घ्रिः
चं + चूः = चञ्चूः
पिं + डम् = पिण्डम्
कुं + तः = कुन्तः
संरं + भः = संरम्भः

---

* उपसर्गः सर्वोऽपि सुबन्तः । अत तस्य पदत्वम् । तस्मात् 'संपृक्तौ' इत्यादौ विकल्पेनानुस्वारः ।

सं + भवः = सम्भवः | सं + ख्या = सङ्ख्या
गृहं + गत्वा = गृहङ्गत्वा | इत्थं + कृत्वा = इत्थङ्कृत्वा
शं + करः = शङ्करः | सं + बं + धः = सम्बन्धः
सं + भ्रमः = सम्भ्रमः | झं + झावातः = झञ्झावातः

**७.२.** [18]तवर्गस्य लकारे परे लकारादेशो भवति । तत्र नकारस्य अनुनासिकलँकारो भवति ।

| तवर्गः + (ल्) = ल्/लँ् |
|---|

- तद् + लयः
  त + ल् + लयः = तल्लयः । (द् = ल्)
- पठन् + लिखति
  पठ + लँ् + लिखति = पठल्लिँखति । (न् = ल्)

अन्यान्युदाहरणानि -

चलत् + लाङ्गलम् = चलल्लाङ्गलम् | पतत् + लेखनी = पतल्लेखनी
जहत् + लक्षणा = जहल्लक्षणा | गच्छन् + लक्ष्मणः = गच्छल्लँक्ष्मणः
विलसत् + लङ्काः - विलसल्लङ्का | गर्जन् + लङ्केश्वरः - गर्जल्लँङ्केश्वरः
वदन् + लज्जितः - वदल्लँज्जितः | जनान् + लब्ध्वा - जनाल्लँब्ध्वा
जगत् + लयः - जगल्लयः | ललत् + ललन्तिका - ललल्ललन्तिका

## ८. [19]ङमुडागमसन्धिः ङ मु ट् = ङ्, ण्, न्

ह्रस्वस्वरपूर्वकङान्तात् ह्रस्वस्वरपूर्वकणान्तात्, ह्रस्वस्वरपूर्वकनान्तात् च पदात् स्वरे परे, स्वरात्पूर्वं क्रमात् ङ् ण् न् इत्येते आगमाः भवन्ति । ङ् ण् न् इत्येतेषां द्विरुच्चारणं भवतीति फलितोऽर्थः ।

i. | (ह्रस्वस्वरपूर्वकाः) ङ् ण् न् + स्वराः = - ङ् - - ण् - - न् - |
|---|

- प्रत्यङ् + आत्मा
  प्रत्यङ् + ङ् + आत्मा = प्रत्यङ्ङात्मा ।
- सुगण् + ईशः
  सुगण् + ण् + ईशः = सुगण्णीशः

---

18. तोर्लि - ८.४.६० तवर्गस्य लकारे परे परसवर्णः स्यात् ।
19. ङमोः ह्रस्वादचि ङमुण् नित्यम् - ८.३.३२ ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्य अचो नित्यं ङमुडागमः स्यात् ।

- पचन् + अस्ति
  पचन् + न् + अस्ति = पचन्नस्ति

अन्यान्युदाहरणानि -

| | |
|---|---|
| गच्छन् + अस्ति = गच्छन्नस्ति | तस्मिन् + इति = तस्मिन्निति |
| सर्वस्मिन् + अपि = सर्वस्मिन्नपि | उदङ् + इह = उदङ्ङिह |
| तिर्यङ् + अत्र = तिर्यङ्ङत्र | तस्मिन् + एतस्मिन् = तस्मिन्नेतस्मिन् |
| स्वस्मिन् + एव = स्वस्मिन्नेव | पूर्वस्मिन् + ईश्वरे = पूर्वस्मिन्नीश्वरे |
| तपस्विन् + एहि ! = तपस्विन्नेहि ! | एकस्मिन् + अम्बुजे = एकस्मिन्नम्बुजे |
| लिखन् + एव = लिखन्नेव | अपरस्मिन् + औषधे = अपरस्मिन्नौषधे |
| हसन् + अत्ति = हसन्नत्ति | रुदन् + आयातः = रुदन्नायातः |
| शर्मन् + अधीहि = शर्मन्नधीहि | कस्मिन् + इह = कस्मिन्निह |

## ९. पूर्वसवर्णसन्धिः

पूर्वसवर्णः = घ् झ् ढ् ध् भ् ।

**९.१.** [20]तत्तद्वर्गीयतृतीयव्यञ्जनात् (जशः) परस्य हकारस्य, तत्तद्वर्गीयचतुर्थव्यञ्जनं विकल्पेन आदेशो भवति ।

i. (ग् ज् ड् द् ब्) + ह = घ / झ् / ढ् / ध् / भ्

- वणिग् + हसति
  वणिग् + घ् + असति = वणिग्घसति/वणिग्हसति ।
- अज् + हलौ
  अज् + झ् + अलौ = अज्झलौ/अज्हलौ ।
- षड् + हयाः
  षड् + ढ् + अयाः = षड्ढयाः/षड्हयाः ।
- तद् + हितम्
  तद् + ध् + इतम् = तद्धितम्/तद्हितम् ।
- अब् + ह्रदौ
  अब् + भ् + रदौ = अब्भ्रदौ/अब्ह्रदौ ।

अन्यान्युदाहरणानि -

| | |
|---|---|
| वाग् + हीनः = वाग्घीनः | प्राग् + हसित्वा = प्राग्घसित्वा |
| षड् + हर्म्याणि = षड्ढर्म्याणि | जगद् + हित = जगद्धितम् |
| अब् + ह्रासः = अब्भ्रासः | तद् + हि = तद्धि |

20. झयो होऽन्यतरस्याम् - ८.४.६२ झयः परस्य हस्य पूर्वसवर्णो वा स्यात् ।

| | |
|---|---|
| तद् + हेतुकम् = तद्धेतुकम् | सुहृद् + हृष्टः = सुहृद्धृष्टः |
| गच्छद् + हूणः = गच्छद्धूणः | भ्राजद् + हिरण्यम् = भ्राजद्धिरण्यम् |
| महद् + हास्यम् = महद्धास्यम् | विड् + हसति = विड्ढसति |
| सम्राट् + हरिद्राम् = सम्राड्ढरिद्राम् | पतद् + हिमम् = पतद्धिमम् |
| भवद् + हितरक्षकः = भवद्धितरक्षकः | |

**९.२.** पूर्वसवर्णः = थ्

[21]उदुपसर्गात्परस्य स्थाधातोः स्तम्भधातोश्च आदौ स्थितस्य सकारस्य थकारादेशो भवति ।

**(उद् ) + स् = थ्**

- उत् + स्थानम्
  उत् + थ् + थानम् = *उत्थ्थानम् (उत्थानम्)
- उत् + स्तम्भनम्
  उत् + थ् + तम्भनम् = *उत्थ्तम्भनम् (उत्तम्भनम्)

अन्यान्युदाहरणानि -

| | |
|---|---|
| उत् + स्थातव्यम् = उत्थातव्यम् | उत् + स्थितिः = उत्थितिः |
| उत् + स्थातुम् = उत्थातुम् | उत् + स्थापनम् = उत्थापनम् |
| उत् + स्थानम् = उत्थानम् | उत् + स्थाप्य = उत्थाप्य |
| उत् + स्तम्भितः = उत्थ्तम्भितः | उत् + स्तम्भनीयः = उत्थ्तम्भनीयः |

## १०. छत्वसन्धिः

[22]पदान्ते स्थितात् तत्तद्वर्गीयप्रथमव्यञ्जनात्परस्य शकारस्य छकारो विकल्पेन आदेशो भवति । किन्तु शकारात्परे स्वराः यरलवमनाश्च (अम्) भवेयुः ।

i. **(प्रथमव्यञ्जनम्) + श् = छ्**

- वाक् + शरः
  वाक् + छ् + अरः = वाक्छरः/वाक्शरः । (श् = छ्)
- तच् + शिवः
  तच् + छ् + इवः = तच्छिवः/तच्शिवः । (श् = छ्)

---

21. उदः स्थास्तम्भोः पूर्वस्य - ८.४.६१ उदः परयोः स्थास्तम्भ्वोः पूर्वसवर्णः स्यात् ।

* थकारस्य विकल्पेन लोपो भवति । ४६ पृष्ठं पश्यन्तु ।

22. शश्छोऽटि - ८.४.६३ पदान्ताज्झयः परस्य शस्य छो वा स्यादटि ।

- मृच् + शकटिकम्
  मृच् + छ् + अकटिकम् = मृच्छकटिकम्/मृच्शकटिकम् ।
- मधुलिट् + शेते
  मधुलिट् + छ् + एते = मधुलिट्छेते/मधुलिट्शेते ।
- तच् + श्लोकेन
  तच् + छ् + लोकेन = तच्छ्लोकेन/तच्श्लोकेन ।
- तच् + श्मश्रु
  तच् + छ् + मश्रु = तच्छ्मश्रु/तच्श्मश्रु ।
- तच् + श्नाप्रत्ययः
  तच् + छ् + नाप्रत्ययः = तच्छ्नाप्रत्ययः/तच्श्नाप्रत्ययः ।

अन्यान्युदाहरणानि -

वाक् + शस्त्रम् = वाक्छस्त्रम् / वाक्शस्त्रम्
तत् + शुभम् = तच्छुभम् / तच्शुभम्
विट् + शङ्करः = विट्छङ्करः / विट्शङ्करः
सच् + शीलम् = सच्छीलम् / सच्शीलम्
चलच् + शुकः = चलच्छुकः / चलच्शुकः
नश्यच् + शास्त्रम् = नश्यच्छास्त्रम् / नश्यच्शास्त्रम्
विद्वच् + श्रद्धा = विद्वच्छ्रद्धा / विद्वच्श्रद्धा
तच् + श्लाघनम् = तच्छ्लाघनम् / सच्श्लाघनम्
एतच् + श्वस्तनम् = एतच्छ्वस्तनम् / एतच्श्वस्तनम्
तच् + श्मशानम् = तच्छ्मशानम् / तच्श्मशानम्

**११.** [23]नकारान्तात् पदात् चछयोः परयोः *नकारस्य शकारः, टठयोः परयोः षकारः, तथयोः परयोः सकारश्च आदेशो भवति, आदेशात् पूर्वत्र स्थित स्वरः अनुनासिकः अनुस्वारयुक्तो वा भवति । किन्तु एतेभ्यः चादिभ्यः परे स्वराः यरलवमनाश्च (अम्) भवेयुः ।

---

23. नश्चव्यप्रशान् - ८.३.७ अम्परे छवि नकारान्तस्य पदस्य रुः स्यात् ।

* 'नश्चव्यप्रशान्' इति सूत्रम्, अग्रे 'समःसुटि' इति सूत्रञ्च प्राधान्येन लिखितम् । किन्तु उपर्युक्तः सर्वोऽपि न तयोः सूत्रयोरर्थः । प्रक्रियासौकर्याय अन्येषां सूत्राणामर्थोऽपि क्रोडीकृतः ।

i. **न् + (चछ) = ँश् / ंश**

- तान् + च
  ताँ + श् + च = ताँश्च /
  तां + श् + च = तांश्च ।
- एतान् + छात्रान्
  एताँ + श् + छात्रान् / = एताँश्छात्रान् /
  एतां + श् + छात्रान् / = एतांश्छात्रान् ।

ii. **न् + (टठ) = ँष् / ंष्**

- श्लोकान् + टीकाभिः
  श्लोकाँ + ष् + टीकाभिः/ = श्लोकाँष्टीकाभिः /
  श्लोकां + ष् + टीकाभिः = श्लोकांष्टीकाभिः ।
- तान् + ठक्कारान्
  ताँ + ष् + ठक्करान् / = ताँष्ठक्कारान् /
  तां + ष् + ठक्कारान् = तांष्ठक्कारान्

iii. **न् + (तथ) = ँस् / ंस्**

- अस्मान् + तारय
  अस्माँ + स् + तारय = अस्माँस्तारय /
  अस्मां + स् + तारय = अस्मांस्तारय ।
- तान् + थूत्करोति
  ताँ + स् + थूत्करोति = ताँस्थूत्करोति /
  तां + स् + थूत्करोति = तांस्थूत्करोति ।

अपवादः - 'प्रशान्'. शब्दे तु नायं नियमः । यथा - प्रशान् तनोति ।

**१२.** [24]समुपसर्गात् *सकारादौ कृधातौ परे मकारस्य सकारादेशो भवति, सकारादेशानन्तरं पूर्वस्थितः अकारः अनुनासिकः अनुस्वारयुक्तो वा भवति । [25]सकारादेशानन्तरं सकारस्य विकल्पेन लोपश्च भवति ।

---

24. समः सुटि - ८.३.५. समो रुः स्यात्सुटि ।

* सम्परिभ्यां करोतौ भूषणे - ६.१.१३७ सम्परिपूर्वस्य करोतेः सुट् स्यात् भूषणे सङ्घातार्थे च । संस्करोति = अलङ्करोति । संस्कुर्वन्ति = सङ्घीभवन्ति इति सिद्धान्तकौमुद्याम् । अतोऽनयोरर्थयोः कृञ्धातुः सादिर्भवति । तस्मात्संस्कृतं नाम अलङ्कृतम् इत्यर्थः ।

25. समो वा लोपमेके (भा)

i. | (स) म् + (स्क्) = ँस् |

- सम् + स्कर्ता
  सँ + स् + स्कर्ता = सँस्स्कर्ता /
  सँ + स्कर्ता = सँस्कर्ता ।
- सम् + स्कृतम्
  सँ + स् + स्कृतम् = सँस्स्कृतम् /
  सँ + स्कृतम् = सँस्कृतम्

ii. | स म् (+स्क्) = ंस् |

- सम् + स्कर्ता
  सं + स् + स्कर्ता = संस्स्कर्ता /
  सं + स्कर्ता = संस्कर्ता
- सम् + स्कृतम्
  सं + स् + स्कृतम् = संस्स्कृतम् /
  सं + स्कृतम् = संस्कृतम्

## १३. तुगागमसन्धिः

[26]ह्रस्वात् स्वरात् छकारे परे तयोर्मध्ये *चकारागमः भवति, [27]दीर्घात्पदान्तात्तु विकल्पेन भवति ।

i. **नित्यम्** - | ह्रस्वस्वरः + छ = - च् - |

- वृक्ष + छाया
  वृक्ष + च् + छाया = वृक्षच्छाया

ii. **विकल्पेन** - | दीर्घपदान्तं + छ = - च् - |

- शिखरिणी + छन्दः
  शिखरिणी + छन्दः = शिखरिणीच्छन्दः/शिखरिणीछन्दः ।

---

26. छे च - ६.१.७३ ह्रस्वस्य छे परे तुगागमः स्यात् ।

* पाणिनिना तुगागमः (त्) विहितः । तुगागमे सति श्चुत्वं भवत्येवेति चकारागमः इति लिखितम् । तुगागमत्वेन प्रसिद्धिरस्तीति तुगागमसन्धिरिति लिखितम् ।

27. पदान्ताद्वा - ६.१.७६ दीर्घात्पदान्तात् छे परे तुग्वा स्यात् ।

अन्यान्युदाहरणानि -

संस्कृत + छात्रः = संस्कृतच्छात्रः  श्वेत + छत्रम् = श्वेतच्छत्रम्
अक्षर + छन्दसः = अक्षरच्छन्दः  कार्य + छलम् = कार्यच्छलम्
शुभ्र + छविः = शुभ्रच्छविः  गृह + छादनम् = गृहच्छादनम्
मानव + छाया = मानवच्छाया  सूक्ष्म + छिद्रम् = सूक्ष्मच्छिद्रम्
दीर्घ + छुरिका = दीर्घच्छुरिका  वृक्ष + छेदः = वृक्षच्छेदः
स + छत्रः = सच्छत्रः(छत्रसहितः)  संस्कृत + छाया = संस्कृतच्छाया
मातृ + छाया = मातृच्छाया  एतरेय + छान्दोग्ये = एतरेयच्छान्दोग्ये
पदवी + छात्राः = पदवीच्छात्राः/पदवीछात्राः
मात्रा + छन्दः = मात्राच्छन्दः/मात्राछन्दः

## इमे विषयाः क्वचिदपेक्ष्यन्ते

**१. यवयोर्लोपः**[28]

पदान्ते विद्यमानस्य अकारपूर्वस्य आकारपूर्वस्य वा यकारस्य वकारस्य च स्वरे परे विकल्पेन लोपो भवति । लोपे कृते निमित्तस्य सद्भावेऽपि स्वरसन्धिः न भवति ।

- तस्याय् + इदम्
  तस्या + इदम् = तस्या इदम्/तस्यायिदम्
- उभाव् + अपि
  उभा + अपि = उभा अपि/उभावपि

**२. केषाञ्चन व्यञ्जनानां लोपः**[29]

व्यञ्जनात्परस्य ञमङणनान् वर्जयित्वा वर्गीयव्यञ्जनस्य शषस इत्येतेषाञ्च एतेष्वेव सवर्णेषु व्यञ्जनेषु परेषु लोपो विकल्पेन भवति ।

- कृष्ण + ऋद्धिः
  कृष्ण् + अर् + द्धिः = कृष्णर्द्धिः । (गुणः) (र् द् ध् इ = र्द्धि)
- कृष्ण् + अर् + धिः = कृष्णर्धिः । (लोपः) (र् (द्) ध् इ = र्धिः)

**३. द्वित्वम्**[30]

स्वरात्परस्य (हकारं वर्जयित्वा) व्यञ्जनस्य द्वित्वं विकल्पेन भवति । स्वरे परे तु द्वित्वं न ।

---

28. लोपः शाकल्यस्य - ८.३.१९ अवर्णपूर्वयोः पदान्तयोः यवयोः लोपो वा स्यादशिपरे ।
29. झरो झरि सवर्णे - ८.४.६५ हलः परस्य झरो लोपः स्यात् सवर्णे झरि ।

सुधी + उपास्यः

सुध्य् + उपास्यः = सुध्युपास्यः । (यण्)

सुध्ध्य् + उपास्यः = (धकारस्य द्वित्वम्)

सुद्ध्य् + उपास्यः = सुद्ध्युपास्यः । [31](जश्त्वम्)

### ४. जश्त्वम्[31]

ञमङणनान् वर्जयित्वा वर्गीयव्यञ्जनानां शषसह इत्येतेषाञ्च तत्तद्वर्गीयतृतीय-चतुर्थव्यञ्जने परे तत्तद्वर्गीयतृतीयव्यञ्जनमादेशो भवति ।

सुधी + उपास्यः

सुध्य् + उपास्यः (यण्)

सुध्ध्य् + उपास्यः (द्वित्वम्)

सु द् ध् य् + उपास्यः (जश्त्वम्) = सुद्ध्युपास्यः

*****

30. अनचि च - ८.४.४७ अचः परस्य यरो द्वे वा स्तः न त्वचि ।

31. झलां जश् झशि - ८.४.५३ झलां स्थाने जश् स्यात् झशि परे ।

# व्यञ्जनसन्धिसङ्ग्रहः

| विशेषः | पूर्ववर्णः | परवर्णः | परिणामः | पृष्ठम् |
|---|---|---|---|---|
| १. पूर्वस्य परस्य वा स्थाने निमित्तानुसारेण आदेशः | अ) स्तुः / श्चुः | श्चुः / स्तुः | श्चुत्वम् | ३१ |
| | आ) स्तुः / ष्टुः | ष्टुः / स्तुः | ष्टुत्वम् | ३२ |
| २. i. पूर्वस्य स्थाने आदेशः (ञमङणनान् वर्जयित्वा वर्गीयव्यञ्जनानां स्थाने) | अ) ञमङणनान् विना वर्गीयव्यञ्जनानि षकारश्च (पदान्ते) | स्वराः, मृदुव्यञ्जनानि | जश्त्वम् | ३४ |
| | आ) ञमङणनान् विना वर्गीयव्यञ्जनानि | कर्कशव्यञ्जनानि | चर्त्वम् | ३६ |
| | इ) ञमङणनान् विना वर्गीयव्यञ्जनानि | अनुनासिकव्यञ्जनानि | अनुनासिकः | ३६ |
| | ई) तवर्गः (नकारोऽपि) | लकारः | परसवर्णः (लकारः) | ४० |
| ii. पूर्वस्य स्थाने आदेशः । (म्/न्/० इत्येतेषां स्थाने) | अ) पदान्ते मकारः | व्यञ्जनम् | अनुस्वारः | ३७ |
| | आ) मकारः / नकारः | ञमङणनान् विना वर्गीयव्यञ्जनानि, शषसह् | अनुस्वारः | ३८ |
| | इ) अनुस्वारः (०) | शषसहान् विना व्यञ्जनानि | परसवर्णः (ङ्ञ्ण्न्म्यँलँवँ) | ३८ |
| ३. परस्य (ह् / श् / स्) | i. वर्गीयतृतीयव्यञ्जनानि | ह् | पूर्वसवर्णः (घ्/झ्/द्/ध्/भ्) | ४१ |
| | ii. वर्गीयप्रथमव्यञ्जनानि | श् | छत्वम् | ४२ |
| | उद् | स्था/स्तम्भ् | थकारः | ४२ |
| ४. आगमः - | i. पदान्ते ह्रस्वस्वरपूर्वकाः ङणनाः | स्वराः | ङमुडागमः | ४० |
| | ii. स्वराः | छकारः | चकारागमः | ४५ |
| ५. | पदान्ते नकारः | चछ / टठ / तथ | ँश्/ ंश्, ँष्/ ंष्, ँस्/ ंस | ४४ |
| | सम् | स्क् | ँस् / ०स् | ४५ |

१. श्चुत्वसन्धौ ष्टुत्वसन्धौ च पूर्वस्य परस्य वा स्थाने आदेशस्य सम्भवोऽस्ति । (३१ तमे पृष्ठे तृतीयां टिप्पणीं पश्यन्तु ।)

२. अत्र विभागद्वयम् -

i. प्रथमभागे पूर्वत्र वर्गीयव्यञ्जनानामेव प्रसक्तिः । परत्र स्वराः मृदुव्यञ्जनानि (अश्) भवन्ति चेत् जश्त्वं, कर्कशव्यञ्जनानि (खर्) चेत् चर्त्वं, ञमङणनाः (ञम्) चेद् अनुनासिकः, (तवर्गात् लकारे लकारः) च पूर्वस्य स्थाने आदेशो भवति ।

ii. द्वितीयभागे पूर्वत्र 'म्, न्, ं' इत्येतेषामेव प्रसक्तिः । परत्र तु उपर्युक्तक्रमेण व्यञ्जनानां श्रवणे अनुस्वारः परसवर्णो वा भवति ।

३. i. पूर्वत्र जश्त्वसन्धिः आदावेव प्रवर्तते । परत्र हकारस्यैव श्रवणम् । पूर्वत्र यदि ग् ज् ड् द् ब् इति श्रूयते, तदा क्रमशः हकारस्य घ्, झ्, ढ्, ध्, भ् इत्येते आदेशाः विकल्पेन भवन्ति ।

ii. पूर्वत्र चर्त्वसन्धिः आदावेव प्रवर्तते । परत्र शकारस्यैव श्रवणम् । तस्य छकारादेशः विकल्पेन भवति । एवञ्च जश्त्वानन्तरं परत्र हकारस्य श्रवणं, चर्त्वानन्तरं परत्र शकारस्य श्रवणं च यदि भवति तर्हि अनयोः प्रसक्तिरिति फलितम् ।

४. i. ङ् ण् न् इत्येतेषां द्विरुच्चारणं भवतीति फलति । नकारान्तस्यैव (गच्छन्, कुर्वन्...) प्राचुर्येण प्रयोगो विद्यते । ङान्तस्य णान्तस्य च विरलः प्रयोगः ।

ii. ह्रस्वस्वर-छकारयोर्मध्ये नित्यं चकारस्य श्रवणं, दीर्घपदान्त-छकारयोर्मध्ये तु विकल्पेन इति विवेकः ।



## स्वरसन्धिसङ्ग्रहः

- पूर्वत्र परत्र च यथासङ्ग्रहम् अकः (अआ, इई, उऊ, ऋॠ) श्रवणम् अस्ति चेत् सवर्णदीर्घः ।
- पूर्वत्र अकारस्य आकारस्य च श्रवणे, परत्र इकः (इ, उ, ऋ) श्रवणे गुणः । एचः (ए, ऐ, ओ, औ) श्रवणे वृद्धिः ।
- पूर्वत्र इकः (इ. उ, ऋ, ऌ) श्रवणे, परत्र असवर्णस्वरश्रवणे यण् ।
- पूर्वत्र एचः (ए. ऐ, ओ, औ) श्रवणे, परत्र स्वरश्रवणे च (पूर्वरूपस्थलं विना) यान्तवान्तादेशः ।
- पूर्वत्र पदान्ते एङः (ए, ओ) श्रवणे, परत्र ह्रस्वस्य अकारस्य श्रवणे पूर्वरूपम् ।
- पदान्ते अकः (अ, इ, उ, ऋ, ऌ) श्रवणे, परत्र ऋकारस्य श्रवणे प्रकृतिभावः । पूर्वत्र प्लुतस्य श्रवणे, प्रगृह्यस्य सद्भावे वा चापि प्रकृतिभावः ।

(सङ्ग्रहेऽस्मिन् विशेषनियमाः अपवादाश्च न उक्ताः ।)

# ५. विसर्गसन्धिः

विसर्गसन्धौ पाणिनीयसूत्राणाम् अनुसरणेन अस्ति कश्चन क्लेशः । यथा -

'कवर्गे पवर्गे च परे जिह्वामूलीयपोपध्मानीयौ भवतः, विसर्गो वा' इति 'कुप्वोः≍क≍पौ च ८.३.३८' इति सूत्रेण विधीयते । यथा - बाल≍ करोति । बालः करोति । वृक्ष≍ फलानि । वृक्षः फलानि । इति । किन्तु बालो गच्छति, प्रथमो भागः इत्यादौ गकारे भकारे च परे 'कुप्वोः ≍क≍पौ च' इत्यस्य कुतो न प्रवृत्तिः ? इत्येतादृशाः संशयाः विसर्गसन्धौ बहुषु स्थलेषु समुद्भवन्ति । एतादृशान् संशयान् अपाकर्तुम् असिद्धत्वं परिशीलनीयं, बहूनां सूत्राणाम् अर्थानां तात्पर्यं हृद्गतं च कर्तव्यं भवति । अतः अत्र बहूनां सूत्राणाम् अर्थाः सङ्गृह्य लिखिताः । अत एव विसर्गसन्धिसम्बन्धीनि सूत्राणि टिप्पण्यां न उद्धृतानि ।

## १. सकारः

[1] कखपफान् वर्जयित्वा कर्कशव्यञ्जने (खरि) परे विसर्गस्य सकारादेशो भवति, शषस इत्येतेषु परेषु तु विकल्पेन सकारो भवति ।

| i. विसर्गः + (कर्कशव्यञ्जनानि) = स् |
|---|

- बालः + तत्र
  बाल + स् + तत्र = बालस्तत्र । (ः = स्)
- रामः + च
  राम + स् + च = (रामस्च) रामश्च* । (ः = स्)
- कृष्णः + छात्रः
  कृष्ण + स् + छात्रः = (कृष्णस्छात्रः) कृष्णश्छात्रः* । (ः = स्)
- डयमानः + टिट्टिभः
  डयमान + स् + टिट्टिभः = (डयमानस्टिट्टिभः) डयमानष्टिट्टिभः* । (ः = स्)

---

* इदमवधेयम् - चछश इत्येतेषु परेषु श्चुत्वसन्धिः, टठष इत्येतेषु परेषु ष्टुत्वसन्धिश्च सकारादेशानन्तरं भवति ।

1. इममेव नियमम् एवं वा वक्तुं शक्यते - विसर्गस्य तथयोः परयोः सकारः, चछयोः परयोः शकारः, टठयोः परयोः षकारः, शषस इत्येतेषु परेषु विकल्पेन क्रमात् शषसा एव आदेशा भवन्ति ।

ii. विसर्गः + (शषस) = स्/ः

- पयः + शीतलम्
  पय + स् + शीतलम् = (पयस् शीतलम्) *पयश्शीतलम्/
  पयःशीतलम् । (ः = स्)
- श्रीधरः + षष्ठः
  श्रीधर + स् + षष्ठः = (श्रीधरस्षष्ठः) *श्रीधरष्षष्ठः/श्रीधरःषष्ठः
- भक्तः + सेवते
  भक्त + स् + सेवते = भक्तस्सेवते/भक्तःसेवते ।

## २. जिह्वामूलीयः उपध्मानीयश्च

'क ख' इत्येतयोः परयोः (ᳵ) जिह्वामूलीयः, 'प फ' इत्येतयोः परयोः (ᳵ) उपध्मानीयश्च विसर्गस्य स्थाने विकल्पेन भवति ।

i. ः + क / ख = ᳵ

- बालः + करोति
  बाल ᳵ + करोति = बाल ᳵ करोति / बालः करोति
- तरुणः + खनति
  तरुण ᳵ + खनति = तरुण ᳵ खनति / तरुणः खनति ।

ii. ः + प / फ = ᳵ

- कृष्णः + पिबति
  कृष्ण ᳵ + पिबति = कृष्ण ᳵ पिबति / कृष्णः पिबति ।
- वृक्षः + फलति
  वृक्ष ᳵ + फलति = वृक्ष ᳵ फलति / वृक्षः फलति ।

### इदमवधेयम्

१. 'क्ष, प्स, त्स' इत्येतेषु परेषु विसर्ग एव श्रूयते । न जिह्वामूलीयोपध्मानीयौ, न वा सकारः । दशरथः क्षत्रियः । अद्भिः प्सातम् । कः त्सरुः । (त्सरुः = खड्गमुष्टिः)
२. नमस्करोति । नमः करोति । नम ᳵ करोति - इति त्रिधा प्रयोगः । 'पुरस्करोति' अत्र सकार एव ।
३. एतन्नियमानन्तर्भूताः केचन सन्ति । यथा - आविष्कृतम्, निष्प्रत्यूहम्, दुष्कृतम्, सर्पिष्कुण्डिका, अयस्कारः, अयस्कुम्भः, अयस्पात्रम्, अहरहः इत्यादयः । एते च सिद्धान्तकौमुदीतः ज्ञेयाः ।

## ३. रेफः

'अ आ' इत्येतौ वर्जयित्वा स्वरात् (इचः) परस्य विसर्गस्य स्वरे मृदुव्यञ्जने च (अशि) परे रेफादेशो भवति । अव्ययसम्बन्धिनः ऋकारान्तशब्दस्य सम्बोधनसम्बन्धिनश्च विसर्गस्य अकारात् आकारात् परस्यापि रेफादेशो भवति ।[2]

i. (अ आ इत्येतौ विना स्वराः) + ः + (स्वराः/मृदुव्यञ्जनानि) = र्

- मुनिः + इति
  मुनि + र् + इति = मुनिरिति (ः = र्)
- भानुः + असौ
  भानु + र् + असौ = भानुरसौ
- तैः + आगतम्
  तै + र् + आगतम् = तैरागतम्
- धेनुः + गच्छति
  धेनु + र् + गच्छति = धेनुर्गच्छति
- एतैः + भक्षितम्
  एतै + र् + भक्षितम् = एतैर्भक्षितम्

ii. अव्ययसम्बन्धी विसर्गः + (स्वराः/मृदुव्यञ्जनानि) = र्

- पुनः + अत्र
  पुन + र् + अत्र = [3]पुनरत्र ।
- प्रातः + गच्छति
  प्रात + र् + गच्छति = प्रातर्गच्छति ।

iii. ऋकारान्तशब्दस्य सम्बोधनसम्बन्धी विसर्गः + (स्वराः + मृदुव्यञ्जनानि) = र्

- पितः + वन्दे
  पित + र् + वन्दे = [3]पितर्वन्दे

## ४. लोपः

**४.१.** आकारात्परस्य विसर्गस्य स्वरे मृदुव्यञ्जने च परे (अशि) लोपो भवति ।

(आ) + ः + (स्वराः/मृदुव्यञ्जनानि) = लोपः

- बालाः + अत्र

---

2. ससजुषो रुः - ८. २. ६६ इति विहितस्य रुकारस्यैव उत्वं भवति, नान्यस्य इति स्मर्तव्यम् ।
3. विसर्गसन्धेः चतुर्थेन नियमेन अत्र उकारो न भवतीति स्मरणीयम् ।

बाला + अत्र = [4]बालाअत्र ।

- लताः + एधन्ते
  लता + एधन्ते = लता [4]एधन्ते ।
- ताः + गच्छन्ति
  ता + गच्छन्ति = ता गच्छन्ति ।
- वृद्धाः + यान्ति
  वृद्धा + यान्ति = वृद्धा यान्ति ।

**४.२.** अकारात्परस्य विसर्गस्य अकारं वर्जयित्वा स्वरे परे लोपो भवति ।

(अ) + : + (अकारं विना स्वराः) = लोपः

- रामः + आगच्छति
  राम + आगच्छति = [4]राम आगच्छति
- कृष्णः + एति
  कृष्ण + एति = कृष्ण [4]एति

**४.३.** 'एषः', 'सः' इत्यनयोः पदयोर्विसर्गस्य अकारं विना यत्किञ्चिद्वर्णे परेऽपि लोपो भवति ।

- एषः + [4]इच्छति
  एष + इच्छति = एष इच्छति ।
- एषः + गच्छति
  एष + गच्छति = एष गच्छति ।
- सः + आगच्छति
  स + आगच्छति = स[4] आगच्छति ।
- सः + तत्र
  स + तत्र = स तत्र ।

**४.४.** अकारं वर्जयित्वा स्वरात्परस्य विसर्गस्य रेफे परे लोपो भवति । लोपे कृते पूर्वस्वरः दीर्घः च भवति । अव्ययसम्बन्धिनः विसर्गस्य अकात्परस्यापि लोपो भवति ।

---

4. स्वरे परे विसर्गस्य विकल्पेन यकारोऽपि भवति । यथा - बालाय् अत्र । लताय् एधन्ते । रामयागच्छति । कृष्णयेति । एषयिच्छति । सयागच्छति इति । किन्तु यकारोपेतस्य प्रयोगः विरलः ।

i. | अकारं विना स्वरः + ः (+ र्) = लोपः, पूर्वस्य दीर्घः |

- कविः + रचयति ।

  कवि + रचयति → (लोपः)

  कवी + रचयति = कवी रचयति

- भानुः + राजते

  भानु + राजते → (लोपः)

  भानू + राजते = भानू राजते

ii. पुनः + रमते

पुन + रमते (लोपः)

पुना रमते = पुना रमते

**इदमवधेयम्** - विसर्गलोपे कृते निमित्तस्य सद्भावेऽपि स्वरसन्धिः न कर्तव्यः ।

## ५. उकारः

अकारात्परस्य विसर्गस्य अकारे मृदुव्यञ्जने च (हशि) परे उकारो भवति । उकारे कृते गुणसन्धिरवश्यं करणीयः । अकारे परे गुणानन्तरं पूर्वरूपसन्धिः अपि कर्तव्यः ।

| (अ) + ः + (अ/मृदुव्यञ्जनानि) = उकारः |

- रामः + अपि

  राम + उ + अपि (ः = उ)

  रामो + अपि (गुणः)

  राम् + ओ + पि = रामोऽपि । (पूर्वरूपम्)

- बालः + हसति

  बाल + उ + हसति (ः = उ)

  बालो + हसति = बालो हसति । (गुणः)

**इदमवधेयम्** - निमित्तस्य सद्भावेऽपि अव्ययसम्बन्धिनः ऋकारान्तशब्दस्य सम्बोधनसम्बन्धिनः च विसर्गस्य उकारो न भवति । यथा - पुनरत्र । प्रातर्गच्छति । हे पितरत्र ! हे होतर्गच्छ ।

अन्यान्युदाहरणानि -

भूमिः + तोयम् = भूमिस्तोयम्

ततः + ततः = ततस्ततः

तैः + अपि = तैरपि
पितुः + इच्छा = पितुरिच्छा
गुरोः + भाषणम् = गुरोर्भाषणम्
हरिः + अवदत् = हरिरवदत्
कपिः + अपि = कपिरपि
कः + चित् = कश्चित्
बालाः + धावन्ति = बाला धावन्ति
देवाः + आगच्छन्ति = देवा आगच्छन्ति
कः + इदानीम् = क इदानीम्
शिवः + वन्द्यः = शिवो वन्द्यः
गजः + गच्छति = गजो गच्छति
बालः + हसति = बालो हसति
रामः + जयति = रामो जयति
गुरुः + त्राता = गुरुस्त्राता
सः + खादति = स खादति
एषः + आसीत् = एष आसीत्
सः + अब्रवीत् = सोऽब्रवीत्
बालः + तिष्ठति = बालस्तिष्ठति
हे मातः + आगच्छ = मातरागच्छ
हे भ्रातः + गच्छ = भ्रातर्गच्छ

*****

# इदमत्र ज्ञातव्यम्

## (अ) बोधनक्रमः इत्थम्

यद्यपि विसर्गः विविधानि रूपाणि सृजति*, तथापि प्राचुर्येण श्रवणपथमारूढानि आरुह्यमाणानि आरोक्ष्यमाणानि च एतानि सन्ति -

| | |
|---|---|
| १. गुरुस्तत्र । (गुरुश्च । गुरुष्षष्ठः ।) | १. सकारः |
| २. बालः करोति । बाल ✕ करोति । | २. विसर्गः, जिह्वामूलीयः |
| ३. बालः पिबति । बाल ✕ पिबति । | ३. विसर्गः, उपध्मानीयः |
| ४. हरिरत्र । | ४. रेफः |
| ५. बाला अत्र । | ५. लोपः |
| ६. बाल इच्छति । | ६. लोपः |
| ७. बालोऽस्ति । बालो हसति । | ७. उत्वम् |

एते अंशाः अनेन क्रमेण बोधनीयाः । तथाहि -

१ - ३. विसर्जनीयस्य सः खरि, कखपफे तु विसर्गः, जिह्वामूलीयोपध्मानीयौ च ।

४. इचः परस्य रेफोऽखरि ।

५. आतः परस्य लोपोऽखरि ।

६. अतः परस्य लोप आचि ।

७. अतः परस्य अति, हशि च उत्वम् ।
(विसर्जनीयस्येति सर्वत्रानुवर्तते)

**विवरणम् -**

१. विसर्गात् परः यदि खर् (कर्कशव्यञ्जनम्) वर्णः (कखपफं वर्जयित्वा) श्रूयते, तर्हि विसर्गस्य स्थाने सकारः प्रवर्तते । विसर्गात् पूर्वं किमस्तीति परिशीलनं नावश्यकम् ।
[सकारादेशानन्तरं यदि श्चुत्वस्य (च् छ् श् इत्येतेषु परेषु) ष्टुत्वस्य (ट ठ् ष् इत्येतेषु परेषु) अवसरः, तदा श्चुत्वं ष्टुत्वं च कार्यम् ।]

२+३. विसर्गात्परौ यदि कखौ तदा जिह्वामूलीयः, यदि पफौ उपध्मानीयः च विकल्पेन विसर्गस्य स्थाने भवतः । जिह्वामूलीयस्य उपध्मानीयस्य चाभावे विसर्गस्यैव श्रवणम् ।

४+५. विसर्गात्परो यदि खर्वर्णः (कर्कशव्यञ्जनम्) न भवति, तद्भिन्नः यः कोऽपि वर्णः भवतु नाम, तदा विसर्गात्पूर्वं किमस्तीति परिशीलनीयम् । यदि इच्

---

* विसर्गस्य विविधरूपप्राप्तिः ५८ तमे पृष्टे विशदीकृता ।

(अकारम् आकारं च वर्जयित्वा सर्वेऽपि स्वराः) वर्णो भवति तर्हि विसर्गस्य रेफः । यदि इच् नास्ति आकारोऽस्ति (न तु अकारः) तर्हि विसर्गस्य लोपः ।

६. विसर्गात्परः खर्वर्णो नास्ति, पूर्वम् इच् नास्ति, नापि आकारः, तदा अकारः पूर्वं भवतीति सिद्धम् । तदा पुनः परवर्णः क इति परिशीलनीयम् । यदि अकारं वर्जयित्वा स्वरः (आच् इत्येष प्रत्याहारः पाणिनिना न कृतः ।) भवति तदा अपि विसर्गस्य लोपः ।

७. विसर्गात्पूर्वः परश्च ह्रस्वः अकारः, परः हश्वर्णो वा (अ + मृदुव्यञ्जनम्) भवति, तर्हि विसर्गस्य उकारो भवति । (ततो गुणः । अकारे परे तु पूर्वरूपमपि भवति ।)

अपवादाः -

i. यदि विसर्गः अव्ययसम्बन्धी, ऋकारान्तशब्दस्य सम्बोधनसम्बन्धी वा स्यात् तर्हि अशि परे रेफः, खरि परे सकारः । यथा - पुनरत्र । पुनस्तत्र । हे पितरत्र । हे होतर्यज ।

ii. 'एष' इत्यस्मात्परस्य 'स' इत्यस्मात्परस्य च हलि परे विसर्गस्य लोपः । यथा - एष विष्णुः । स शम्भुः ।

iii. आचः परस्य विसर्गस्य रेफे परेऽपि लोपः, अव्ययसम्बन्धिनः ऋकारान्तशब्दस्य सम्बोधनसम्बन्धिनः च विसर्गस्य तु अकारात्परस्यापि लोपः । लोपे कृते दीर्घश्च । यथा - कवी राजते / पुना रमते । हे दाता राजसे त्वम् ।

## एष सङ्ग्रहः

१. **सकारादेशः** ः + खर् = स् । गुरुस्तत्र

२+३. **विसर्गः, जिह्वामूलीयः, उपध्मानीयश्च** ः + क ख प फ = ः/⨯क । ⨯प ।

बालः करोति । बाल⨯ करोति । बालः पिबति । बाल⨯ पिबति ।

४. **रेफादेशः** इच् + ः + अश् = र् । हरिरत्र । हरिर्गच्छति ।

५. **लोपः** आ + ः + अश् = लोपः । बाला अत्र । बाला हसन्ति ।

६. **लोपः** अ + ः + आच् = लोपः । बाल आगच्छति । बाल उत्सहते ।

७. **उकारादेशः** अ + ः + अ/हश् = उ । बालोऽत्र । बालो गच्छति ।

एवञ्च विसर्गात्परो यदि खर्वर्णो (कर्कशव्यञ्जनम्) न भवति, (तद्भिन्नः वर्णः भवेदेव) पूर्वश्च इच् वर्णो भवति तर्हि रेफः । यदि इच् न भवति तदा अकारो वा आकारो वा भवेदेव । तदा सावधानेन मनसा लोपो वा उकारो वा इति निश्चेतव्यम् ।

## (आ) पाणिनेः क्रमः

विसर्गसन्धौ पाणिनेः क्रमः इत्थं विद्यते । यथा -




१. ससजुषोरुः - ८.२.६६
२. रो रि - ८.३.१४
३. भो भगोऽघोऽपूर्वस्य योऽशि - ८.३.१७
४. लोपः शाकल्यस्य - ८.३.१९ हलि सर्वेषाम् - ८.३.२२
५. व्योर्लघुप्रयत्नतरः शाकटायनस्य - ८.३.१८
६. अतो रोरप्लुतादप्लुते - ६.१.११३, हशि च - ६.१.११४
७. खरवसानयोर्विसर्जनीयः - ८.३.१५
८. स्तोः श्चुना श्चुः - ८.४.४०
९. ष्टुना ष्टुः - ८.४.४१
१०. विसर्जनीयस्य सः - ८.३.३४
११,१२. कुप्वो ⨯क ⨯पौ च - ८.३.३७
१३. खर्परे शरि वा विसर्गलोपो वक्तव्यः (वा)

* एतत्तदोः सुलोपोऽकोरनञ्समासे हलि - ६.१.१३२ इति सूत्रेण सुप्रत्ययस्यापि लोपः कृतः । किन्तु 'एष' इत्यस्मात् 'स' इत्यस्मात् परस्यैव सुप्रत्ययस्य लोपः । यथा - एष विष्णुः । स शम्भुः इति ।

## (इ) विसर्गस्य परिणामाः

इमानि वाक्यानि परिशील्यन्ताम् -

| *पदविभागः कृतः* | *सन्धिकार्यं कृतम्* | *विसर्गः इत्थं रूपेण परिणतः* |
|---|---|---|
| 1. देवाः इह | 1. देवाय् इह | 1. य् |
| 2. भोः अच्युत | 2. भोय् अच्युत | 2. य् (लघुप्रयत्नतरः) |
| 3 कविः इच्छति | 3. कविरिच्छति | 3. र् |
| 4. बालः च | 4. बालश्च | 4. श् |
| 5. शिवसुतः षण्मुखः | 5. शिवसुतष्षण्मुखः | 5. ष् |
| 6. छात्रः तिष्ठति | 6. छात्रस्तिष्ठति | 6. स् |
| 7. बालः अस्ति | 7. बालोऽस्ति | 7. ओ |
| 8. छात्रः करोति | 8. छात्र ⨯ करोति | 8. ⨯ क |
| 9. वृक्षः फलति | 9. वृक्ष ⨯ फलति | 9. ⨯ फ |
| 10. बालः इच्छति | 10. बालः इच्छति | 10. - (लोपः) |
| 11. रघुः क्षत्रियः | 11. रघुः क्षत्रियः | 11. ः |

इत्थं विसर्गः आत्मानम् एकादशधा प्रकाशयति । एतेषामपि क्वचित् क्वचित् वैकल्पिकत्वात् संहितायां विवक्षितायां वाक्यानि अधिकत्रिंशानि भवन्ति । यथा - (अत्र उत्सर्गसूत्राणाम् उदाहरणानि दर्शितानि । एतत्तदोः सुलोपो अकोरनञ्समासे हलि - ६.१.१३२, अतः कृकमि... ८.३.४६ इत्यादीनां विशेषसूत्राणाम् उदाहरणानि न प्रदर्शितानि ।)

| | | |
|---|---|---|
| १. बालाय् अत्र | १३. शिवसुतष्टीकते | २४. शिशुः सरति |
| २. बाला अत्र | १४. छात्रस्तिष्ठति | २५. शिशुस्सरति |
| ३. बालाय् अत्र (ल. प्र.) | १५. गुरु⨯कारयति | २६. पयः श्च्योतति |
| ४. बाला गच्छन्ति | १६. गुरुः कारयति | २७. पयश्श्च्योतति |
| ५. बालोऽस्ति | १७.शिष्य⨯पठति | २८. पयश्च्योतति |
| ६. बालय् इच्छति | १८. शिष्यः पठति | २९. मूलधातुः ष्ठा इति |
| ७. बाल इच्छति | १९. रघुः क्षत्रियः | ३०. मूलधातुष्ष्ठा इति |
| ८. बालय् इच्छति (ल. प्र.) | २०. हरिः शेते | ३१. मूलधातु ष्ठा इति |
| ९. बालो गच्छति | २१. हरिश्शेते | ३२. बालः स्थाता |
| १०. कविरिच्छति | २२. गुरुः षष्ठः | ३३. बालस्स्थाता |
| ११. कवी राजेते | २३. गुरुष्षष्ठः | ३४. बालस्थाता |
| १२. हरिश्च | | |

प्रथमवाक्यतः एकादशवाक्यान्तं स्वरे मृदुव्यञ्जने च (अशि) परे सन्धिकार्यं कृतम् । द्वादशवाक्यतः चतुस्त्रिंशत्तमवाक्यान्तं कर्कशव्यञ्जने (खरि) परे सन्धिकार्यं कृतम् ।

---

१, ६. भो भगोऽघोऽपूर्वस्य योशि - ८.३.१७
२, ७. लोपः शाकल्यस्य - ८.३.१९
३, ८. व्योर्लघुप्रयत्नतरः शाकटायनस्य - ८.३.१८
४. हलि सर्वेषाम् - ८.३.२२
५. अतो रोरप्लुतादप्लुते - ६.१.११३
९. हशि च - ६.१.११४
१०. ससजुषो रुः - ८.२.६६
११. रो रि - ८.३.१४
१२. विसर्जनीयस्य सः - ८.३.३४ स्तोश्चुना श्चुः - ८.४.४०
१३. विसर्गनीयस्य सः - ८.३.३४ ष्टुना ष्टुः - ८.४.४१
१४. विसर्जनीयस्य सः - ८.३.३४
१५,१६,१७,१८ कुप्वोः⨯क⨯पौ च - ८.३.३७
१९. शर्परे विसर्जनीयः - ८.३.३५
२०,२२,२४. वा शरि - ८.३.३६
२१,२३,२५. विसर्जनीयस्य सः । श्चुत्वं, ष्टुत्वम् ।
२६,२९,३२. वा शरि - ८.३.३६
२७,३०,३३. विसर्जनीयस्य सः । श्चुत्वम् । ष्टुत्वम् ।
२८,३१,३४. खर्परे शरि वा विसर्गलोपो वक्तव्यः ।